નં. ૨૨૨

# વાઘેલા રાજા સારંગદેવના સમયની સિન્ટ્રામાં રાખેલી દેવપટ્ટનપ્રશસ્તિ[1]

વિ. સં. ૧૩૪૩ માઘ શુદ ૫ સોમવાર.

નીચે આપેલી પ્રશસ્તિની એક નકલ સર ચાર્લ્સ વિલ્કિન્સના ભાષાન્તર સાથે મરફીની "ટ્રાવેલ્સ ઈન પોર્ટુગલ"(૧૭૯૮) માં પ્રથમ પ્રસિદ્ધ થઈ હતી. એ પત્રૂં દશ વર્ષ પહેલાં ડા. બર્જેસે મે. આ. સ. વે. ઈ. (ભાં. ૧૮૭૯) નં. ૯ પા. ૧૦૪ માં ડૉ. ભગવાનલાલ ઈન્દ્રજીના સંસ્કૃત અક્ષરાન્તર સાથે તથા પ્રશસ્તિના ટુંક સાર સહિત પ્રસિદ્ધ કર્યું હતું. ડૉ. ભગવાનલાલનું અક્ષરાન્તર એકંદરે સાચું છે, તોપણ હું માનું છું કે પ્રો. જી. ડી. વાસ્કોન્સેલૉસ એબ્રુએ મને આપેલાં પેન્સીલ રબ્બિંગ ઉપરથી નવીન આવૃત્તિની પ્રસિદ્ધિ વધારાની નહીં ગણાય. આ પ્રતિકૃતિ ઉપરથી કેટલીક શંકાઓ દૂર થાય છે, જે ડૉ. ભગવાનલાલ ઇંદ્રજી અનુમાનથી ઉકેલી શક્યા ન હતા, અને તે ઉપરાંત કેટલાક સ્થાનોમાંની તેમની પૂર્તિઓ અસલની બરાબર છે એમ પણ આ પ્રતિકૃતિથી બતાવી શકાય છે.

લેખ બહુ સંભાળપૂર્વક એક લાંબા લીસા કાળા પત્થર ઉપર કોતરેલો છે. તેનું માપ ૪૨ ઈંચ × ૨૦ ઈંચ છે, અને તેમાં ૬૧ પંક્તિઓ છે. આ પત્થર હાલ સિંટ્રામાં ડોન જોઆઓ ડી કેસ્ટ્રોના કિવન્ટામાં રાખેલો છે; પણ તેની હકીકત ઉપરથી જણાય છે કે તે અસલ સોરઠમાં સોમનાથ અગર દેવપટ્ટનના મંદિરનો હતો. તે એકંદરે સુરક્ષિત છે, ફક્ત થોડાક અક્ષરો કોઈ કોઈ સ્થળે નાશ પામ્યા છે. લિપિ ૧૩ મી સદીની પ્રચલિત દેવનાગરી છે.

સોરઠમાં, (કાઠિઆવાડમાં) હાલ વેરાવળ પાસે જાણીતા પ્રખ્યાત શૈવતીર્થ સોમનાથપટ્ટન અગર દેવપટ્ટન અગર પ્રભાસમાં ત્રિપુરાન્તક નામના શૈવ સાધુએ પાંચ લિંગોની બનાવેલી પ્રશસ્તિ આ લેખમાં આપી છે.

---

૧ એ. ઈ. વો. ૧ પા. ૨૭૧ જી. બ્યુલ્હર.

## अक्षरान्तर

१ ओं ॥ ओं नमः शिवाय । हृदि स्थितं चिन्मयमात्मवेदिनः समाधिमास्थाय विलोकयंति यं । स चित्तसंतापमपाकरोतु वः स्तनंधयश्वेतमयूखभूषणः ॥[ १॥ ]

२ शैलात्मजोरसिजशृंगकुरंगनाभिपत्रावलीतलिनतल्पशयालुपाणिः । पीयूषभानुकलिकाकलितावतंसो देवः शिवानिवि-

३ तनोतु दिवानिशं वः । २ [ ॥ ] त्रैलोक्यमंगलमनंगरिपोरपत्यमंकुरितैकदशनोल्लसदाननश्रीः । देवः प्रपद्य हृदयैकपदीं कपर्दी

४ भूयादनेकपमुखः सुखसंपदे वः । ३ [ ॥ ] श्रीविश्वमल्ल इति भूपतिमौलिरत्नं चौलुक्यवंशमवतंसयति स जिष्णुः । यस्य द्विधारमपि

५ संयति मंडलाग्रमारादमंस्त शतधारमरातिवर्गः । ४ [ ॥ ] आबद्धमूलमभितः क्षितिपा[ द्रि ]जातमुन्मुलयन् कुलिशवंशभुवा भुजेन । सत्व-

६ स्य यः किमपि धाम जनेन राजनारायणेति जगदे जगदेकनाथः । ५ [ ॥ ] यस्मिन्नात्मकलां न्यधत्त सकलक्षत्रावतंसे जगत्तापघ्यापदपा-

७ करिष्णुमहिमा श्रीवैद्यनाथः प्रभुः । शस्त्रैस्तेन चिकित्सितास्तदुचितं विश्वोपकारव्रतस्नातेन प्रतिभूभुजामपि हृदः प्रौढा मदग्रंथयः । ६ [ ॥ ]

८ नागल्लदेवीति बभूव यस्य जाया जयश्रीरिव देहबद्धा । तया स राजा सुतरां बभासे भासेव देवो हरिणांकमर्त्तिः । ७ [ ॥ ] आशांतविश्रांत-

९ भुजप्रतापः प्रतापमल्लावरजः स राजा । स्वपौरुषोत्कर्षरसातिरेकादेकातपत्रां बुभुजे धरित्रीं । ८ [ ॥ ] श्रीविश्वमल्लः स्वपदेभिषिच्य प्रताप-

१० मल्लात्मजमर्ज्जुनं सः । साकं सुधापाकमभुक्त[ नाक ]नितंबिनीनामधरामृतेन । ९ [ ॥ ] राकानिशाकरसनाभिगुणाभिरामोदामोदरांश इव वि-

११ क्रममांसलश्रीः । भूपालमौलिमणिरर्ज्जुनदेवनामा कामार्ज्जुनीमिव धनानि धरामदुग्ध । १० [ ॥ ] हस्ते विधाय कदनायदुराशयानां दाना-

१२ वधूतसुरशाखिनि भूमिचक्रं । यः स्वैरुदारचरितैरनघः प्रजानां रक्षां चकार किल चक्रधरावतारः । ११ [ ॥ ] तस्यांगभूर्जयति गूर्जरराज्य-

---

શ્લો. ૧ છંદઃ વંશસ્થ શ્લોક ૨ થી ૫–છંદઃ વસંતિલકા શ્લોક ૫— क्षितिपाद्रिं નો ચોથો વ્યંજન તદ્દન નાશ પામ્યો છે; जगदे ના પહેલા બે અક્ષરો પણ ઝાંખા થઈ ગયા છે. શ્લો. ૬ છંદઃ શાર્દૂલવિક્રીડિત. શ્લોક ૭–૯ છંદઃ ઉપજાતિ શ્લો. ૧૦ વાંચો °मभुक्त; मभु° શબ્દો ઝાંખા છે જ્યારે नाक લગભગ તદ્દન નાશ પામ્યું છે. શ્લોક ૧૦–૧૨ છંદઃ વસંતતિલકા ત્રીજા પાદનો આઠમો અક્ષર અને ચોથાનો બીજો ત્રીજો સ્પષ્ટ નથી.

१३ लक्ष्मीसंभोगकंदलितसौख्यनिमग्नचेताः । क्षोणीसमुद्धरणकेलिरसोत्तरंगः सारंग-
देव इति शार्ङ्गधरानुभावः । १२ [॥] युधि यादवमा-

१४ लवेश्वरावकृत क्षीणबलौ बलेन यः । पृथुविग्रहधारिणौ पुरापतगेंद्रो गजकच्छपा-
विव । १३ [॥] इतश्च । भट्टारकश्रीलकुलीशमूर्त्या तपः-

१५ क्रियाकांडफलप्रदाता । अवातरद्भिश्वमनुग्रहीतुं देवः स्वयं बालमृगांकमौलिः ।
१४ [॥] अनुग्रहीतुं च चिरं विपुत्रकानुलूकभूतानभिशाप-

१६ तः पितुः । ललाटभुर्व्या इव लाटभूषणं समेत्य कारोहणमध्युवास यः । १५ [॥]
अवतेरुश्चत्वारः पाशुपतव्रतविशेषचर्यार्थं । इह कुशिकगा-

१७ र्ग्यकौरुष्यमैत्रेया इति तदंतसदः ।.१६ [॥] ततस्तपस्विनां तेषां चतुर्द्धा जा-
तिरुद्गता । भुवं विभूषयामास चतुरर्णवमुद्रितां । १७ [॥] एतैरनुगृ-

१८ हीतानामन्वयेन महात्मनां । निःसीमवैभवं श्रीम × + × × कमित्यभूत् ।
१८ गार्ग्येयगोत्राभरणं वभूव स्थानाधिपः कार्त्तिकराशिनामा ।

१९ मूर्त्तस्तपोराशिरिवाश्रितानामालोकमात्रेण हरन्नघानि । १९ [॥] तेन स्वहस्त-
कमलानुगृहीतजन्मा वाल्मीकिराशिरुदियाय दयालुचेताः [।]

२० वाणीं च तीर्थपदवीं च सदा पदानां न्यासैः स्वचित्तविमलाकृ [ ति ]भिः
पुनानः । २० [॥] तेनानुगृह्य समकेति सतां प्रबोधकारी तपोधनयुवा त्रि-

२१ पुरांतकेति साक्षाद्भवंति विबुधाः किल तद्विधानां हस्तांबुजेन दृषदोपि कृतप्रतिष्ठाः॥
२१ [॥] वाल्मीकिराशेः सुगृहीतनाम्नस्तस्यैष शिष्यस्त्रिपुरांतकेति ।

२२ तीर्थांतरालोकनकौतुकेन पवित्रयामास दिशश्चतस्रः । २२ [॥] पूर्वं तपस्विगृ-
हिणीस्पृहणीयमूर्त्तिर्यो देवदारुविपिने वि[ जहार ]

२३ देवः । आशावधूलवणिमानमनुग्रहीतुं तीर्थावगाहनमिषेण चचार सोयं । २३
[॥] समाधिपूतेन हृदंबुजेन यः —⏑यि—⏑⏑ · ⏑—⏑[।]

२४ ततः शुचिब्रह्मसरः सरोजैरानर्च केदारपदारविंदे । २४ [॥] जगद्गुरुं चेतसि
यः प्रपद्य यागेश्वरं मूर्त्तमि—⏑—⏑[।] ⏑—⏑—⏑⏑—

२५ प्रसादसंपत्तिलभ्यानि तपःफलानि । २५ [॥] मिथो मिलज्जन्हुकलिंकदन्यात-
रंगहस्तोपहृतैः पयोभिः । ससर्ज्ज यस्याजि ⏑—⏑——⏑—⏑

२६ पः पाद्यमिव प्रयागः । २६ [॥] प्रदक्षिणीकृत्य सतां प्रदीपः श्रीपर्वतं यः
—— किल सर्वतोपि । श्रीमल्लिनाथस्य विलोकनेन कृतार्थ——⏑⏑—⏑—

શ્લો. ૧૨ निमग्नतुं પહેલું પદ અસ્પષ્ટ છે. શ્લો. ૧૩ છંદઃ વૈતાલીય શ્લો. ૧૪ છંદઃ ઉપજાતિ શ્લો. ૧૫ છંદઃ વંશસ્થ શ્લો. ૧૬ છંદઃ આર્યા શ્લોક ૧૭–૧૮ અનુષ્ટુભ્ શ્લો. ૧૯ છંદઃ ઇન્દ્રવંજા શ્લોક ૨૦–૨૧ વસંતતિલકા શ્લો. ૨૨ છંદઃ ઉપજાતિ શ્લો. ૨૩ છંદઃ વસંતતિલકા શ્લોક ૨૪–૨૭ છંદઃ ઉપજાતિ.

२७ चे । २७ [ ॥ ] प्रेंखालितानि कलसोद्भवपादमुद्रा निःकल्मपाकृतिपु विंध्यगिरेः
शिलासु । रेवाजलानि गजराजविगाहलीला— —᳘—᳘᳘᳘
२८ पाण्यपि यः सिषेवे । २८ [ ॥ ] गोदावरीतीरविहारिणीभिर्वनस्थलीनामधिदेव-
ताभिः । कृतार्थयन्नध्वगदृक्पयोजं यो जंगमस्त्र्यंवकं—᳘—᳘— । २९ [ ॥ ]
२९ ततः शमाद्वैतरसाभिरामे रामेश्वरं चेतसि चिंतयन् यः । ददर्श लंकाधिपकालरात्रेः
प्रस्थानवीथीमिव सेतुलेखां । ३० [ ॥ ] श्रीदेवपत्तनसम—
३० स्तघनस्तनीनां नेत्रारविंदसुकृतैरिव सानुवंधैः । तीर्थावगाहनधिया दिशि पश्चि-
मायामायातवानुपशमायतनं कृती यः । ३१ [ ॥ ] सरस्वती-
३१ सागरसंप्रयोगविभूषिताभोगमथागमद्यः । सोमेशचूडावलमानवालचंद्रप्रभासंवलितं
प्रभासं ३२ [ ॥ ] इह महीतलतीर्थविगाहना-
३२ दखिलतीर्थमयीं दधदाकृतिं । भुवनभूषणभूतमभूषयन्नगरमिंदुकलाभरणस्य यः ।
३३ इह साक्षादुमाकांतः श्रीमान् गंडबृहस्पतिः ।
३३ आर्यमेनं विनिर्माय पट्टं चक्रे महत्तरं । ३४ [ ॥ ] स्थानकं निजविशुद्धचरित्रै-
रुद्धरिस्यति महत्तर एषः । इत्यवेत्य मुमुदे हृदि चातुर्जातके-
३४ न गुणजातरसेन । ३५ [ ॥ ] अस्ति श्रीत्रिपुरांतकोपि विबुधश्रेणीकिरीटोपल-
च्छायापल्लवलालितांह्रिकमलः कासां गिरामध्वनि । यस्योद्दामचरि-
३५ त्रवैभवनिधेरेपा कियंतं गुणग्रामं धारयतु स्वकुक्षिकुहरक्रोडे वराकी श्रुतिः । ३६
[ ॥ ]धनानि कामाधिकवामलोचनप्रांचलचं-
३६ चलानि यः । ददौ महादौस्थ्यनिपीडितात्मने सतां प्रपन्नार्त्तिहरा हि संपदः ।
३७ [ ॥ ] आस्थितस्य पुरुपोत्तमभूय कामजन्मनि समाहितबुद्धेः । य-
३७ स्य पुण्यघटितस्य रमेति प्रेयसी भुवनभूषणमास्ते । ३८ [ ॥ ] सरस्वतीमौलि-
श्रयालुकेतकीपलाशलक्ष्मीसहपांशुकेलयः । महात्मनो यस्य म-
३८ होज्वला गुणा दिगंगनानामवतंसतां ययुः । ३९ [ ॥ ] सोमेश्वरायतनमंडपमु-
त्तरेण श्रीभाजि जीर्णघटिकालयसंनिधाने । श्रीकंठपंचमुखवा-
३९ समधिष्ठितानि येनाक्रियंत कृतिनायतनानि पंच । ४०[ ॥ ] मातुर्माल्हणदेव्या-
[ यः ] श्रेयसे माल्हणेश्वरं । सतामध्येयमहिमा तन्मध्ये निरमापय-
४० त् । ४१ [ ॥ ] उमापतेरायतनं नाम्ना गंडबृहस्पतेः । कृती कृतयुगाचारः
कारयामास तत्र यः । ४२ [ ॥ ] श्रीबृहस्पतिभार्याया श्लाघ्यजन्मनः । श्रेय-

---

श्लो. २८ वसंततिलका वांचो प्रखोल्तितानि, कलशोद्भव°, निष्कल्मषा° श्लो. २९ उपजाति श्लोकनुं अंत पाद जंगमस्त्र्यंवकमाससाद होवानो संभव छे. श्लो. ३० उपजाति श्लो. ३१ वसंततिलका श्लो. ३२ उपजाति वांचो वाल° श्लो. ३३ द्रुतविलम्बित श्लो. ३४ अनुष्टुभ वांचो बृहस्पति षष्ठं श्लो. ३५ छंदः स्वागता. वांचो उद्धरिष्यति श्लो. ३६ शार्दूलविक्रीडित श्लो. ३७ छंद वंशस्थ श्लो. ३८ स्वागता वांचो पुरुषोत्तम भूयं श्लो. ३९ छंदः वंशस्थ श्लो. ४० वसंततिलका श्लो. ४१–४३ अनुष्टुभ् वांचो °बृहस्पतेः वांचो बृहस्पति.

४१ से यः सतां सीमा निरमासीदुमेश्वरं । ४३ [॥] इह स्वनाम्ना त्रिपुरांतके-
श्वरं महत्तरश्रीत्रिपुरांतको व्यधात् । प्रियाभिधानेन मनोरमं श्रिया रमा-
४२ पतिः संविदधे रमेश्वरं । ४४ [॥] गोरक्षकं भैरवमांजनेयं सरस्वतीं सिद्धि-
विनायकं च । चकार पंचायतनांतराले बालेन्दुमौलिस्थितमानसो
४३ यः ४५ [॥] आत्मबाहुयुगसौहृदांचितस्तम्भसौरभशुभंसुतोरणं । दूरमस्तदुरित-
स्तदुत्तरद्वारभूपरिसरे चकार यः । ४६ [॥] सम्मार्जनाय देवा-
४४ नां कावडिद्वयमंभसः । सम्मार्ज्जनी जगत्याश्च कोलिनी प्रतिवासरं । ४७ [॥]
कर्त्तव्यमेतदुभयं वटुकेन पटीयसा । स्वमासपाटकद्रव्यनैवेद्या-
४५ न्नोपयोगतः । ४८ युग्मं । श्रीखंडहेतोः शशिखंडमौलिपुरानुकुल्येन मपारके
यः । द्रम्मांश्चकार प्रतिमासमष्टावष्टापदोत्सर्गनिसर्गपूतः । ४९ [॥]
४६ दातव्यं मालि[क]श्रेण्या शतपत्रशतद्वयं । नवीनकणवीराणां द्वे सहस्रे च नि-
त्यशः । ५०[॥] घाटीवाहाय वाटीभ्यो ग्रहीतुं शुचि[वेदि]कां । चक्रे परी-
४७ क्षिपट्टे यः षड् द्रम्मान्मासपाटके । ५१ [॥] माणकद्वितयं चोपा मुद्रानामेक-
माणकं । घृतं कर्षांश्च चत्वारस्तैलं दीपायतादृशं । ५२ [॥] जात्यानि पंच-
४८ पूगानि स्थितके स्थितिशालिना । कोष्टागारे गुणज्ञेन प्रत्यहं येन चक्रिरे । ५३
युग्मं । इहैव धूपवेलार्थं गुग्गुलस्य मणद्वयं । यः पुण्येषु समा-
४९ सक्तः प्रतिमासमकारयत् । ५४ [॥] पत्र – – ं च पंचाशत् पत्राणि
फणिवीरुधां । मेहरेण प्रदेयानि नित्यं वीकटहेतवे । ५५ [॥] पशुपालेन तदे-
५० वं धर्म्मस्थानोपहारसंवद्धं । श्री – – – – कोष्टागारादानीय दातव्यं । ५६
[॥] चोपा माणकमेकं निर्वापे पलिकाद्वयं मुद्गाः । नित्यं घृतकर्षौ द्वाविति
५१ पशुपालाय दातव्यं । ५७ [॥] [इद] × × ‿ दातव्यं नित्यंनैवेद्यहेतवे ।
ततस्तदन्नं वटुना पचनीयं प्रयत्नतः । ५८ [॥] पशुपालेन संकल्प्य तन्नैवे-
५२ द्यं सवीटकं । वटुकाय प्रदा[तव्यं] – – [कर्म्म] विधायिने । ५९ [॥]
मंडपिकायां स्थितके चातुर्जातकशासनात् । प्रत्यहं यः सतां सीमा द्रम्ममेकमका-
५३ रयत् । ६० [॥] अत्रैव कारयामास प्र – – – मुदारधीः । स्थितके यो
नव द्रम्मान् वटुकग्रासहेतवे । ६१ [॥] पूजाप्रतिमां कर्तुं प्रतिमासमुपेयुषः ।
५४ देयाः पंचदश द्रम्माः पशुपालस्य[धर्म्म]तः । ६२ [॥] चातुर्जातकपादानां
यः संमिलितपोचके । ततः पंचदश द्रम्मान् प्रतिमासं व्यधत्त यः ६३[॥]हट्टानि

શ્લો. ૪૪ વંશસ્થ. શ્લો. ૪૫ ઉપજાતિ શ્લો. ૪૬ રથોદ્ધતા શ્લો. ૪૭-૪૮ અનુષ્ટુભ્ શ્લો. ૪૯ છંદઃ ઉપજાતિ શ્લો. ૫૦ થી ૫૫ અનુષ્ટુભ્ શ્લો. ૫૬-૫૭ આર્યા ડૉ. ભગવનલાલ શ્લોક ૫૬ ની ખાલી જગ્યામાં "सोमनाथ" એમ પૂર્તિ સૂચવે છે. શ્લો. ૫૮ થી ૬૪ અનુષ્ટુભ્ શ્લોક ૫૮— પૂર્તિ કરો—इदमेव प्रदातव्यं વાંચો नैवेद्यं વાંચો "पूजाकर्म" શ્લો. ૬૧ વાંચો प्रतिमासमुदारधीः

५५ यो विशिष्टानि त्रीणि प्रीणितमानसः । चातुर्जातकपादेभ्यो वित्तेनादाय दत्तवान् ।
६४ तेषां मध्यादुत्तमं हट्टमेकं देवश्रद्धामालिना मालिकेभ्यः ।

५६ नित्यं पूजापुष्यजातोपहारैः श्रीमच्चातुर्जातकेन प्रदत्तं । ६५ [ ॥ ] चैत्रीमहे
भाद्रपदीमहे च पवित्रकं विस्तरणं च कर्त्तु : महाजनोपि प्रतिहट्ट-

५७ मेकं द्रम्मं विशेषस्थितके चकार । ६६ [ ॥ ] कोष्टागारेण पूगानि मेहरेण
दलानि च । शिवरात्रौ प्रदेयानि चातुर्जातकवीटके । ६७[ ॥ ]श्रीसोमनाथप्रभु-

५८ राजपाटिकात्रये त्रिभिर्हट्टवणिग्भिरात्मना । खर्ज्जूरालिकेराणि युगाश्च कोमलाः सदा
विधेयानि विशुद्धबुद्धिभिः । ६८ [ ॥ ] अमूनि सोमेश्वरदेवरीत्या-

५९ संपूज्य पंचायतनानि पूर्वं । अनेन पश्चात्पशुपालकेन श्रीदेवपाट्यामधिरोहणीयं
। ६९ [ ॥ ]चैत्रीभाद्रपदीभग्नपतितोद्धारहेतवे । चातुर्जा-

६० तकपादेभ्यो धर्म्मस्थानमदत्तः यः । ७० [ ॥ ] स्वोपार्जितेन शुचिना विभवेन
धर्म्मस्थानं च शासनमिदं च विनिर्ममे यः । तेनास्य कीर्त्तननिबद्धयशः-

६१ पताका राकामृगांकधवलाकृतिरुल्लास । ७१ [ ॥ ] श्रीगंडराणकबृहस्पति-
कीर्त्तनस्य सारंगभूपतिसरस्तटभूषणस्य । यः श्रीविलासगृहमा-

६२ यतनस्य मध्ये स्वात्मीयदेवकुलिकां रचयांचकार । ७२ [ ॥ ] तादृक् विशेषशु-
चिताधिगमाय संतश्चित्तेषु बिभ्रति यदीयगुणानजस्रं । पुष्णंति

६३ सिंधुतनयाहृदयाधिनाथनाभीसरोरुहमृणालसनाभितां ये । ७३ [ ॥ ]निर्व्याजभ-
क्तिरसवासितविश्वनाथमाविभ्रतः सरिदमीकगभीरमंतः ।

६४ एतस्य शारदतुषारमयूखलेखानिः कल्मपाणि चरितानि जगत्पुनंति । ७४ [ ॥ ]
सोमार्कवक्रशशिमंडलतो निपीय पीयूषवद्धसखितानि सुभा

६५ षितानि । एषाप्रशस्तिरनवद्यपदार्थ वप्ना । धंधात्मजेन विदधे धरणी धरेण ।
७५[ ॥ ] एनां लिलेख मंत्री विक्रम इति पूर्ण सिंहतनुजन्मा । ऊ-

६६ दटंकयदथ शिल्पी नाहडतनयश्च पूणसीह इति । ७६ [ ॥ ] श्रीनृपविक्रमसं
१३४३ वर्षे माघशुदि ५ सोमे लिंगप्रतिष्टामहोच्छवः समजनि ॥

---

श्लो. ६५ शालिनी. वांचो पूजापुष्प° श्लो. ६६ उपजाति श्लो. ६७ वांचो कोष्ठागारेण अनुष्टुभ् श्लो. ६८ इन्द्रवंशा श्लो. ६९ उपजाति श्लो. ७० अनुष्टुभ् श्लो. ७१–७५ वसंततिलका वांचो °बृहस्पति वांचो संतश्चित्तेषु वांचो निष्कल्मषाणि. श्लो. ७६ गीति वांचो प्रतिष्टामहोत्सवः

ભાષાન્તર

ઓમ્ ॥ ઓમ્ નમઃ શિવાય

શ્લો. ૧-૨ ( શિવની સ્તુતિ )

૩ ( ગણપતિની સ્તુતિ )

૪ પૂર્વે, ભૂપતિઓનો મુકુટમણિ જયશાલી શ્રી વિશ્વમલ્લ ચૌલુકયવંશનો અલંકાર હતો; જેનાં બેધારા ખડ્ગને યુદ્ધમાં શત્રુઓ અનેક ધારવાળું માનતા.

૫ ચોતરફ મૂળ નાંખી રહેલા પર્વત જેવા રાજાઓને વજ્ર સમાન ભુજવડે ઉખેડી નાખતો એ સત્ત્વશાલી, જગતનો એકલો ધણી, રાજનારાયણ કહેવાયો.

૬ જગતના તાપને દૂર કરવાવાળા શ્રી વૈદ્યનાથ પ્રભુએ ક્ષત્રિયોના ભૂષણ એવા એ રાજામાં પોતાની એક કલા મૂકી; તેથી વિશ્વના ઉપકારની દીક્ષા લીધેલા એ રાજાએ શત્રુરાજાઓનાં હૃદયમાંની મદરૂપ ગાંઠોની યોગ્ય ચિકિત્સા કરી.

૭ તેની રાણી નાગલ્લદેવી હતી, જે દેહધારી જયશ્રી જેવી હતી; જેના વડે, જેમ પ્રભા વડે ચંદ્ર શોભે તેમ, રાજા શોભતો હતો.

૮ દિશાઓના અન્ત સુધી જેનો પ્રતાપ પહોંચેલો છે એવો પ્રતાપમલ્લ જેનો નાનો ભાઈ હતો એવો એ રાજા પોતાના પૌરુષ વડે પૃથ્વિનો એક છત્રધારી બન્યો હતો.

૯ પોતાની ગાદીએ પ્રતાપમલ્લના પુત્ર અર્જુનને બેસાડીને એ રાજા સ્વર્ગસુન્દરીઓના અધરામૃત અને સુધા પીવા ચાલ્યો ગયો.

૧૦ પૂર્ણચન્દ્રના જેવા ગુણથી આનંદદાયક, દામોદરના અંશ જેવા, પરાક્રમથી યશસ્વી થયેલા ભૂપતિઓના મુકુટમણિ, એવા અર્જુનદેવે કામધેનુની માફક પૃથ્વી દોહીને ધન મેળવ્યાં.

૧૧ દાનમાં સુરવૃક્ષથી ચઢીઆતા હાથમાં એણે દુષ્ટના સંહાર માટે પૃથ્વીચક્ર ધારણ કર્યું, અને કૃષ્ણનો અવતાર જેવા એ નિષ્પાપ રાજાએ પોતાના ઉદાર ચરિતો વડે પ્રજાની રક્ષા કરી.

૧૨ ગર્જર રાજ્યલક્ષ્મીના સંભોગસુખ આનંદમગ્ન બનેલો, પૃથ્વીનો ઉદ્ધાર કરવાની ક્રીડાનો રસિયો, શાર્ઙ્ગધર જેવા મહિમાવાળો, એનો પુત્ર સારંગદેવ વિજયી છે.

૧૩ જેમ ગરૂડે પૂર્વે ગજ અને કચ્છપને હરાવ્યા હતા તેમ એ રાજાએ મોટા વિગ્રહ ( : શરીર )ધારી રહેલા યાદવેશ્વર અને માલવેશ્વરને લડાઈમાં હરાવ્યા.

૧૪ તપઃક્રિયાઓનું ફળ આપવાવાળા બાલેન્દુશેખર દેવ પોતે વિશ્વના અનુગ્રહને અર્થે ભટ્ટારક શ્રી લકુલીશ રૂપે અવતર્યા.

૧૫ અને પિતાના શાપથી લાંબા વખતથી વિપુત્ર રહેલા ઉલૂકભૂતોના ( ? ઉલૂકના વંશજોના ? ) અનુગ્રહ માટે પૃથ્વીના લલાટ જેવા લાટ દેશમાં આવેલા કારોહણમાં આવી વસ્યા.

૧૬ પાશુપત વ્રત પાળવા માટે એના ચાર શિષ્યો પ્રકટ થયાઃ કુશિક, ગાર્ગ્ય, કૌરુષ અને મૈત્રેય.

૧૭ એ તપસ્વીઓમાંથી ઉદ્ભવેલી ચાર જાતિઓએ ચાર સમુદ્રથી બંધાયેલી પૃથ્વીને શણગારી.

૧૮ ( ખંડિત છે ).

૧૯ મૂર્તિમાન્ તપોરાશિ. દૃષ્ટિ વડે જ આશ્રિતોના પાપનાશક, ગાર્ગેય ગોત્રના અલંકાર, કાર્તિક રાશિનામે, સ્થાનાધિપ ( મઠાધિકારી ) હતા.

૨૦ એના હસ્ત કમલ વડે જેના જન્મનો અનુગ્રહ થયો હતો તેવા, દયાલુ ચિત્તવાળા, વાલ્મીકિરાશિ ઉત્પન્ન થયા, જે પોતાના ચિત્ત જેવા વિમલ પદન્યાસ વડે વાણીને અને તીર્થપદવીને પાવન કરતા.

૨૧ તેણે તરૂણ તપોધન ત્રિપુરાંતકને અનુગ્રહ કરીને સત્પરૂષોનો ઉપદેશક નીમ્યો, એવા પુરૂષોના હસ્તકમલ વડે પ્રતિષ્ઠા પામેલા પત્થરો પણ સાક્ષાત્ દેવો બને છે.

લેખ ૨૨

૨૨ જેનું નામ લેતાં પુણ્ય થાય એવા વાલ્મીકિરાશિના એ શિષ્ય ત્રિપુરાન્તકે તીર્થો જોવાની ઇચ્છાથી ચારે દિશાઓ પવિત્ર કરી.

શ્લો. ૨૩–૩૩ (તીર્થયાત્રા વર્ણન) હિમાલય—કેદારનાથ, પ્રયાગ, શ્રીપર્વત, નર્મદા, ગોદાવરી—ત્ર્યંબક, રામેશ્વર—રામસેતુ, એ પ્રમાણે છેક ઉત્તરથી દક્ષિણ સૂધી ત્રિપુરાન્તકે યાત્રા કરી અને પછી ઉત્તરમાં પાછા ફરીને એ પશ્ચિમ કિનારે દેવપટ્ટન અથવા પ્રભાસ આવ્યો, જ્યાં સરસ્વતી સમુદ્રને મળે છે.

૩૪ અહિંયાં ઉમાના પતિ ગંડ બૃહસ્પતિએ (બૃહસ્પતિનામે મન્દિરપૂજારીએ) ત્રિપુરાન્તકને આર્ય બનાવીને છઠ્ઠો મહત્તર કર્યો.

૩૫–૩૯ (ત્રિપુરાન્તકની પ્રશંસા)

૪૦–૪૬ (ત્રિપુરાન્તકે સોમનાથમાં કરેલાં કાર્યોનું વર્ણન) પાંચ દેવળો બંધાવ્યાં, પાંચ મૂર્ત્તિની પ્રતિષ્ઠા કરી, અને બે સ્તંભના આધારવાળું તોરણ રચાવ્યું.

૪૭–૭૨ (પોતે બંધાવેલાં મંદિરોની પૂજાને અર્થે ત્રિપુરાન્તકે આપેલાં દાનોનું અને પૂજા વિધિનું વર્ણન)

૭૩–૭૪ (ત્રિપુરાન્તકની પ્રશંસા)

(૪૭) નિત્ય દેવોની શુદ્ધિ અર્થે બે કાવડ જળ અને ઝિણી ફૂસ જીજુબની સાવરણી મઠાનો સાફ કરવા માટે—

(૪૮) નૈવેદ્ય અન્ન અને માસિક ખર્ચના આપેલા દ્રવ્યના બદલામાં એક ચાલાક બટુકે આ બન્ને ચીજો મેળવવાની અને તેમનો ઉપયોગ કરવાનું (આ શ્લોકો એક જોડકું રચે છે.)

(૪૯) તે (ત્રિપુરાન્તક) જે સુવર્ણ આપવાની નૈસર્ગિક ભાવનાથી પવિત્ર થયો હતો. તેણે શિરપર ઈન્દુકલા ધારતા દેવની પુરી તરફ કૃપાને લઈને પ્રતિમાસ ૮ દ્રમ્મ મપારકમાં ચંદનકાષ્ટ ખરીદવા અર્પ્યા.

(૫૦) માળીઓનું મંડળ પ્રતિદિન ૨૦૦ શ્વેત કમળ અને ૨૦૦૦ સુગંધિત કનેરનાં પુષ્પ (કણવીર) આપશે.

(૫૧) તેણે ઘાટી વાહને માટે વાડીમાંથી શુદ્ધ વેદિકા પ્રાપ્ત કરવાના માસિક ખર્ચ માટે પરીક્ષિપટ્ટમાં ૬ દ્રમ્મ આપ્યા.

(૫૨) " બે માણક* ચોખા, અને એક માણક મુદ્ગ ચાર કર્ષ ઘૃત (ઘી) અને તેટલું દીપ માટે તેલ " અને

(૫૩) સારી જાતનાં પાંચ સોપારી, (આ સર્વ) તે અન્યના ગુણજ્ઞ સ્થિર જનથી પ્રતિદિન કોઠારમાં અપાયું હતું. (આ બન્ને શ્લોકો જોડકું રચે છે.)

(૫૪) તે કે જે પુણ્ય કાર્યોના અનુષ્ઠાનમાં પરાયણ હતો તેણે અહીં પણ પ્રતિમાસ ધૂપ વેળા માટે બે માણ સુગંધિત ગુગ્ગુલ આપવાની વ્યવસ્થા કરી.

(૫૫) મેહર પ્રતિદિન ૫૦ ... ... ... નાગર વેલનાં પાન બીટક (પાનપટ્ટી) કરવા આપશે.

(૫૬) આ જેની ધર્મ સ્થાન (મંદિરો)માં ઉપહાર માટે વ્યવસ્થા થઈ છે તે પશુપાલે શ્રીસોમનાથના કોઠારમાંથી લાવવું જોઈએ અને (પૂજા કરનાર માણસને તેણે) આપવું.

(૫૭) એક માણ ચોખા અને બે પલ્લિકા મુદ્ગ તથા બે કર્ષ ઘૃત આદિ કોઠારીએ પશુપાલને ઉપહાર માટે પ્રતિદિન આપવું જોઈએ.

---

* માણક એટલે પાંચ મણનું માપ.

(૫૮) (આ પણ) નૈવેદ્ય ઉપહાર માટે પ્રતિદિન આપવું જોઈએ; પછી તે અન્ન સંક્ષાળપૂર્વક બટુકે રાંધવું જોઈએ.

(૫૯) સંકલ્પ કર્યા પછી, પશુપાલે તે નૈવેદ્ય અને બીટક પૂજા કરનાર બટુકને આપવા જોઈએ.

(૬૦) શુચિજનોમાં શ્રેષ્ઠ, તેણે (ત્રિપુરાન્તકે), મણ્ડપિકામાં આવકમાંથી પ્રતિદિન એક દ્રમ્મ ચાતુર્જાતકના શાસનથી અપાવ્યું.

(૬૧) ત્યાં પણ આ ઉદાર મનના પુરૂષે મંદિરોની સેવા કરતા બટુકના પાલન માટે પ્રતિ માસ ૯ દ્રમ્મ અપાવ્યા.

(૬૨) વિધિ અનુસાર અનુપમ પૂજા અર્થે આવનાર પશુપાલને પ્રતિમાસ ૧૫ દ્રમ્મ આપવા જોઈએ.

(૬૩) આ આશય માટે તેણે (ત્રિપુરાન્તકે) પૂજ્ય ચાતુર્જાતકના સંચયમાં (ખજાનામાં) પ્રતિમાસ ૧૫ દ્રમ્મ મૂકયા.

(૬૪) હૃદયમાં આનન્દ કરતાં, તેણે પૂજ્ય ચાતુર્જાતકના દ્રવ્ય માટે ત્રણ ઉત્તમ હાટ ખરીધાં (દુકાનો ખરીદી) અને (તેનાં મંદિરોને ઉપહાર તરીકે) અર્પ્યાં.

(૬૫) તેમાંની ઉત્તમ (દુકાન), (શિવ) દેવમાં શ્રદ્ધાની માળા ધારે છે તે શ્રી ચાતુર્જાતકે, નિત્ય પૂજા, નિત્ય પૂજા અર્થે જોઈતાં પુષ્પ આપવાના બદલામાં માળીઓને આપી.

(૬૬) મહાજનોએ ચૈત્ર અને ભાદ્રપદ પૂર્ણિમાના ઉત્સવ સમયે પવિત્રક અને વિસ્તરણની ક્રિયા માટે દરેક હાટ(દુકાન)માંથી એક દ્રમ્મ આપ્યો.

(૬૭) શિવરાત્રિના ઉત્સવ સમયે ચાતુર્જાતકના બીટક માટે સોપારી (સોમનાથના મંદિરના) કોઠારથી અને પાન મેહરથી અપાવાં જોઈએ.

(૬૮) ત્રણ વિમળ મનના વેપારીઓએ નિત્ય જાતેજ શ્રી સોમનાથ પ્રભુના ત્રણ રાજ પાટિકામાં હાર, શ્રીફળ અને કોમળ ગુગ આપવાં.

(૬૯) ભગવત સોમેશ્વરની પૂજા માટે નિર્માણ થયેલી વિધિ અનુસાર આ પાંચ મંદિરોની પ્રથમ પૂજા કરી, પશુપાલક શ્રીમાન્ દેવના મંદિર જતાં પગથીઆં ઉપર આરોહણ કરશે.

(૭૦) તેણે (ત્રિપુરાન્તકે) પૂજ્ય ચાતુર્જાતકને ચૈત્ર અને ભાદ્રપદ પૂર્ણિમાને દિને ભગ્ન અથવા પતિત થએલાના ઉદ્ધાર માટે આ ધર્મસ્થાન આપ્યું.

(૭૧) આ ધર્મસ્થાન અને આ શાસન સ્વઉપાર્જિત વિમળ વિભવથી પ્રાપ્ત કર્યું હતું તેથી તેનો યશધ્વજ જેનો મંદિરો સાથે યોગ છે તે પૂર્ણ ઈન્દુસમાન ઉજ્જ્વળ પ્રકાશે છે.

(૭૨) શ્રી ગણ્ડ રાણક બૃહસ્પતિના યશની પ્રતિમા અને સારંગ નૃપના સરવરના તટના ભૂષણ રૂપ તે મંદિરના મધ્ય ભાગમાં તેણે તેના કુલદેવનું સ્થાન, થાંનું વિલાસ ગૃહ બંધાવ્યું.

૭૩-૭૪ શ્લોકમાં ત્રિપુરાન્તકની સામાન્ય પ્રશસ્તિ પછી ૭૫ શ્લોકમાં ધંધનો પુત્ર ધરણીધર પ્રશસ્તિનો કર્તા (રચનાર) હતો તે આપણે જાણીએ છીએ. ૭૬ મો શ્લોક આગળ જણાવે છે કે કવિતાનો હસ્તલેખ પૂર્ણ સિંહના પુત્ર મંત્રી વિક્રમથી લખાયો હતો અને તે શિલ્પિ પુણસીહ-નાહડના પુત્રથી કોતરાયો હતો. અનુલેખ અનુસાર વિ. સં. ૧૩૪૩ ના માઘ શુદિ ૧૫ ને સોમવારે, અથવા ડૉ. શ્રામની ગણતરી પ્રમાણે ઈ. સ. ૧૨૮૭ જાન્યુ. ૨૦ ને સોમવારે, પાંચ લિંગની પ્રતિષ્ઠા થઈ હતી. આ તિથિ (તારીખ) ઐતિહાસિક મહત્વની નથી કારણકે તવારિખ અનુસાર સારંગે ૨૨-૨૩ વર્ષ ઈ. સ.૧૨૯૬-૯૭ સુધી રાજ્ય કર્યું.

નં० ૨૨૩

# સારંગદેવનો અનાવડામાંથી મળેલો શિલાલેખ*

વિ.સ. ૧૩૪૮ આષાઢ શુ. ૧૩

વડોદરા રાજ્યના કડી પ્રાંતમાંના પાટણ ગામથી ત્રણ માઈલ ઉપર આવેલા અનાવડા (પ્રાચીન અણહિલવાડ)માં નેહેર ખાતાવાળા ખોદકામ કરતા હતા ત્યારે આ લેખ મળ્યો હતો. અત્યારે તે વહીવટદારની કચેરીમાં પડેલો છે.

લેખની ૨૪ પંક્તિ છે અને તે ૧'–૪½" પહોળો અને ૧'–૫½" ઉંચો છે. પહેલી સાત પંક્તિની શરૂવાતના અક્ષરો ઉખડી ગયા છે પણ તે સિવાય એકંદર રીતે પથ્થર સુરક્ષિત છે. લીપી નાગરી છે અને ભાષા સંસ્કૃત છે અને મંગલાચરણના એક શ્લોક સિવાય આખો લેખ ગદ્યમાં છે.

ર પછીના વ્યંજન બેવડા લખ્યા છે અને બને બદલે વ એક જ વાર પંક્તિ પહેલીમાં उध्धिवत्रते માં લખેલ છે प्रेक्षणी( ण )क અને स्थितफ पंक्ति ૭ મી માં તેમજ व्यक्ति પંક્તિ ૯ અને ૨૧ માં ખાસ નોંધ લેવા જેવા શબ્દો છે. પહેલાનો અર્થ નાટયપ્રયોગ બીજાનો કાયમી દાન અને ત્રીજાનો વિગતોનું સ્પષ્ટીકરણ એમ થાય છે. પંકિત ૭, ૯, ૧૦ મા આવતા पलमान નો અર્થ અચોક્કસ છે. તે જ શબ્દ બીજા લેખોમાં જેવા કે ચાલુક્ય તામ્રપત્ર વિ. સં ૧૨૮૦ (ઇ. એ. વો. ૬ પા. ૧૯૭ પતરૂં બીજું પંકિત ૩ જીએ આપેલા)માં पूर्वं प्रदत्तना અર્થમાં આપેલ છે; કદાચ તે पाल्यवान ને બદલે ભૂલથી લખાયું હોય.

જયદેવના ગીતગોવિન્દમાં જે દશાવતારના વર્ણનવાળો એક શ્લોક છે તે જ શ્લોકથી મંગલાચરણ કરેલું છે, ત્યારબાદ તિથિ આપેલ છે જે રવિવાર આષાઢ શુદિ ૧૩ વિ. સ. ૧૩૪૮ ની છે તે વખતે મહારાજાધિરાજ સારંગદેવ અણહિલ વાટકામાં રાજ્ય કરતા હતા. તેનો મહાસંધિવિગ્રહિક મહામાત્ય મધુસૂદન દસ્તાવેજમાં સીલ વિગેરેનું કામકાજ કરતો હતો. મહંત પેથડ વિગેરે પંચમાં હતા. પેથડ પાલણપુરમાં મુદ્રાધિકારી હતો. શ્રીકૃષ્ણનીમૂર્તિ પાસે પૂજા નૈવેદ્ય તથા નાટય પ્રયોગો માટે ઉપરની તિથિએ તેમજ અગાઉ દાન આપવામાં આવ્યું હતું. અગાઉના દાનમાં નીચે મુજબ આપવામાં આવેલ હતાં. (૧) કરણે આપેલા ૧૮૦ દ્રમ્મ પ્રતિવર્ષ કાયમને માટે (૨) માંડવીમાંથી ૭૨ દ્રમ્મ હમેશને માટે (૩, ૪, ૫) દ્રમ્મ ૭૨, દ્રમ્મ ૩૬ અને દ્રમ્મ ૪૮ દરેક અમાસને માટે શેઠ દેવલે પોતાની સિકિરિમાંથી આપેલા.

નવું દાન ગામના પેથડ વિગેરે પંચે, પુરોહિત એટલે બ્રાહ્મણોએ, મહાજને એટલે કે સાધુ (સાહુકાર) શ્રેષ્ટિ (શેઠ) ઠક્કુર સોની કંસારા વિગેરેએ વણિજયારકે (વણજારાઓ) અને नौवित्तक्के (વહાણવાળાએ) આપેલું હતું. દાનમાં નીચે મુજબ આપેલ હતું: (૧) મજીઠની એક ઘડી દીઠ વેચનાર તરફથી ½ દ્રમ્મ, (૨) હીંગની એક ઘડી દીઠ વેચનાર તેમજ ખરીદનાર તરફથી ૧ દ્રમ્મ (૩) દરેક અનાજના ગાડા દીઠ અમુક (તે સ્પષ્ટ નથી) ૪ ઘીની એક ઘડા ઉપર વેચનાર તરફથી ૧ પળી ઘી.

આનો મંગળાચરણનો શ્લોક ગીત ગોવિંદમાંનો જ છે અને ગીત ગોવિન્દ જયદેવે રચેલું છે જે લક્ષ્મણ[1]સેનના રાજ્યમાં એટલે ૧૨ મી સદીના છેલ્લા ભાગમાં જીવતો હતો. આ લેખમાં તે શ્લોક ટાંકેલો છે તે બતાવી આપે છે કે તેટલી ટુંકી મુદતમાં ગીત ગોવિન્દ પવિત્ર મનાયું હતું. વિશેષમાં આપણા લેખમાં આપેલ છે તે મુજબ શ્રીકૃષ્ણનું મંદિર સારંગદેવના સમય પહેલાં અનાવડામાં અસ્તિત્વમાં હોવું જોઇએ. આ હકીકત ઉપયોગી છે કેમ કે લેખોમાં શ્રીકૃષ્ણના મંદિરનો ઉલ્લેખ ક્યાંઈ બીજે જોવામાં આવતો નથી. મારા ધ્યાનમાં તેવો ઉલ્લેખ છે જે ધારાના દેવપાલના વખતના વિ, સ, ૧૨૭૫ ના લેખમાં[2] શંભુના મંદિર પાસે કેશવે કૃષ્ણની મૂર્તિ સ્થાપ્યા બાબતનો છે.

---

* ઈ. એ. વો. ૪૧ પા. ૨૦ ડૉ. ડી. આર. ભાંડારકર. (૧) જ. એ. સો. બં. વો. ૨ નં. ૫ (મે ૧૯૦૬) પા. ૧૯૭–૯૯. (૨) ઇ. એ. વો. ૨૦ પા. ૩૧૨. પં. ૧૪.

## अक्षरान्तर[1]

१ ॥ वेदानुद्धरते जगंति वहते भुगोल्मुद्धिभ्रेते[2] दैत्यान् दारयते बलिं छलयते क्षत्रक्षयं कुर्व्व-

२ (ते)। [ से ]तुं बंधयते हॅलिं[3] कल्पयते कारुण्यमातन्वते म्लेछार्न्[4] मूर्च्छयते दशा-कृतिकृते कृष्णाय

३ (तस्मै न)मः ॥ [ १ ] संवत् १३४८ वर्षे आषाढ सुदि १३ रवावद्येह श्रीमदणहिलवाटकाधिष्ठितमहारा-

४ ( जाधि )राज श्रीसारंगदेव कल्याणविजयराज्ये तत्पादपद्मोपजीविनि महासांधि[5] महामा-

५ (त्य) [ श्री ]मधुसूदने श्री श्रीकरणादि समस्तमुद्राव्यापारान् परिपंथयतीत्येवं काले प्रवर्तमानेऽस्मु

६ (नै)[ व ] स्वामिना पा[ ल्ह ]णपुरमुद्रायां नियुक्तमहं श्रीपेथडप्रमृति पंचकुल-प्रतिपत्तौ[6] देव-

७ (श्री)[ कृ ]ष्णपादानां [ पू ]जानैवेद्य प्रेक्षणीकनिमित्तं[7] अर्ग्मे[8] पलमानस्थित-कर्स्य तथा संमति महं

८ (श्री) पेथडप्रमृति[ पं ]चकुलेन तथा पंचमुखसमस्तनगरेण च कृतनव्यदेवदायस्य च शा-

९ सनपट्टिका यथा अस्मीकपलमानदेवदायस्यंल्यक्तिः ॥ वृ० करण स्थितके द्र०१८० तथा वृ ( ० )

१० मंडपिकायां स्थितके द्र० ७२ तथा श्रे॰ देवलेन आत्मनः श्रेयोऽर्थं[9][10] पलमान आत्मीय सीकरि[11]

११ सत्क श्रीकृष्णपा[ दानां ]दत्त द्र० ७२ तथा[12] तस्यद्र० ३६ तथा अमावास्यैां[13] २ स्थितके द्र० ४ वर्षं प्रतिज्ञातं

१२ द्र० ४८ एवमेतत् पूर्व्व स्थितकं सांप्रतं उपविष्टमहं श्रीपेथडप्रमृतिपंचकुलेन तथा पुरो० ध

१३ रणीधर । पुरो० सि( र )धर । पुरो० मोषादित्य । पुरो० हरिसर्म्म । सा॰ आभा । सा॰ हेमा । सा॰ महण-

१४ सीह । ठ॰ तेजा । सा॰ मयधर । श्रे॰ सादल । श्रे॰ देवल । सा॰ समरा । सा॰ घणपति । श्रे॰ आसधर

---

१ मूળ પથ્થર ઉપરથી २ વાંચો मुद्विभ्रते ३ વાંચો हलं ४ વાંચો म्लेच्छान् ५ व અને सौ ની વચમાં પંનું ભૂંસ્યા છે. ६ વાંચો प्रेक्षणक ७ વાંચો अर्धे ८ વાંચો पाल्यमान ९ વાંચો अमीय पाल्यमान १० વાંચો पाल्यमान ११ सीकिरि भुલથી सीरकने બદલે લખાયું હોય. १२ વાંચો तस्य १३ વાંચો अमावास्यायां.

१५ सा° गुणधर । सा° भडसीह । श्रे° नाग[ ड ] । श्रे° सामत । सा° झांझा । सा° वयजलदेव । सा° क्रूर-

१६ पाल । सा° पदमसीह । श्रे° मदनसीह । श्रे° देवसीह । भणशा° पेता । मण° गांधी । सा° जा[ ॥ ]-

१७ ल्हण । श्रे° गुणराज । सा° केसव । सा° झंझा । श्रे° रतन । सा° त्रीकम । सोनी° अर्जुन । सा° चांग-

१८ देव । सा° दामर । कंसा° जयता । पूगी° तेजा । सा° केसव । सा° मूरा । सा° कुंदा । सा° नागपाल-

१९ प्रभृति समस्त महाजन । तथा सम[ स्त ] वणिज्यारक । तथासमस्त नौवि त्तकप्रभृति पंचमुखन-

२० गरेण निजपूर्वजानां श्रेयसे देवश्रीकृष्णपादानां पूजानैवेद्यप्रेक्षणीकनिमित्तं[१४] कृतनव्य-

२१ देवदायस्य व्यक्तिः ॥ मांजिष्ठा घडी १ द्र° ६०॥ विक्रेतु कामो ददाति तथा हींगुदा वडा[१५] १ द्र° ६१

२२ दायकग्राहकौ ददतः ॥ कणश [ क ] ट १ पायली १ छाटडा १ पायली पा° घृततैलघडा १ प ( ॥ )-

२३ ली १ एतत् विक्रेता दधाति। एष समस्तदेवदायो आचंद्रार्कतारकं यावत् सम- स्तपंचमुखनग-

२४ रेण दातव्यः पालनीयश्च

---

૧૪ વાંચો પ્રેક્ષણક ૧૫ વડા તે ઘડા અથવા ઘડી માટે હોય. ૧૬ વાંચો घृत.

નં૦ ૨૨૪.

# ખંભાતમાં ચિન્તામણિ પાર્શ્વનાથના શિલાલેખ.*

વિ. સંવત ૧૩૫૨.

ચિન્તામણિ પાર્શ્વનાથનું જૈન મંદિર જ્યાં આ શિલાલેખ છે, એ ગુજરાતમાં ખેડા કલેક્ટોરેટના એક મુસલમાન સ્ટેટના મુખ્ય શહેર ખંભાતમાં ખલ્લ નામના એક મોઢ વાણીયાએ બંધાવ્યું હતું. આ શહેર એ જ નામના અખાત ઉપર આવેલું છે. મંદિર સંવત ૧૩૫૨, ઈ. સ. ૧૨૯૬ માં વાઘેલા વંશના અર્જુનદેવના પુત્ર રામદેવના સમયમાં બંધાયું હતું. લેખ એક સારા કઠિન પત્થરમાં કોતરેલો છે. તે સુરક્ષિત છે, પરંતુ ઉપરના ડાબા ખૂણાનો થોડો ટુકડો ફક્ત કપાઇ ગયેલો છે. તેની સપાટીનું માપ ૩૭ ઇંચ×૧૯ ઇંચનું છે. અને તેમાં દેવનાગરી લિપિમાં સંસ્કૃતની ૨૪ પંક્તિઓ લખેલી છે.

अक्षरान्तर

१ .... .... .... ....। .... .... .... तो जातं विघ्नीध्वंसदैवतं ॥ १ ॥ शठवलकमठेन ग्रावसंघातमुक्तं प्रशमकुलिशवन्हेः

२ .... .... .... .... .... ... श्रियं वः ॥ २ ॥ औदासिन्येन येनेह विजितारातिवाहिनी ॥ पार्श्वनाथजिनं नौमि कौमारं मारसंस्तुतं ॥

३ ३ ॥ ... .... .... .... .... .... .... .... .... दिनोदयं स चक्रे गुरुगगनाभ्युदितः सहस्रकीर्त्तिः ॥ ४ ॥ संवत् ११६९ वर्षे ज्येष्ट वदि ७ सोमे सजय( ति )

४ .... ... .... .... .... .... .... पातिजगंति ॥ ५ ॥ दिव्येगुर्जरमंडलेऽतिविपुले वंशोऽतिदीप्तद्युतिश्चौलुक्यो विदितः परैरकलितः श्वेतातपत्रोज्वलः ॥ क्ष्मा-

५ .... ... .... .... .... ... .... .... पागतोनिजभुजो पार्ज्यां च राज्यश्रियं ॥ ६ ॥ श्रीमान् लुणिगदेव एव विजयीशंभुप्रसादोदितस्त-स्माद्वीररसैकवीरधवलः पुत्रः प्रजापालकः

६ .... .... .... .... .... .... जयी येनार्धीराशुदस्य कंदमिव तं कीर्तेः पुना रोपितं ॥ ७ ॥ रिपुमल्लप्रमर्द्दीयः प्रतापमल्ल ईरितः ॥ तत्सूनु-र्ज्जुनो राजा राज्येऽजन्यर्ज्जुनो परः ॥ ८ ॥ अ

७ .... .... .... क्तिविजयीपरेषां ॥ तन्नंदनोऽनिंदितकीर्त्तिरस्ति ज्येष्ठोऽपि रामः किमुकामदेवः ॥ ९ ॥ उर्व्वी धुरं धारयतः प्रजानां पितुः पदस्यास्य च धुर्यकल्पौ ॥ कल्पद्रुमौ

* આ. સ. વ. ૫. ૨૨૭.

८ .... .... .... णौ भुवि रामकृष्णौ ॥ १० ॥ श्रीस्तंभतीर्थं तिलकं पुराणां स्तंभं जयश्रीमहितं महद्भिः ॥ आस्ते पुरं मौढिममोढवंशे सुभूपिते भूपतिवर्णनीये ॥ ११ ॥ निदर्शनं साधुसुसत्यसंधो यं

९ ... .... .... कीर्त्तिरामः ॥ खलाख्यया यो विदितो महर्द्धिर्वृद्धिं गतो धर्म्मधनी विनीतः ॥ १२॥ रूपलक्षणसौभाग्यधर्म्मदाननिदर्शनं । जाताया मौढनारीषु सातोऽस्य वादडा .... १३ सं ....

१० ... देशात्साध्वी ह्यकार्षीज्जिनपार्श्वचैत्यं यन्मंडलं नागपते फणाग्ररत्नं नु किं पुण्यममूर्त्तमस्याः ॥ १४ ॥ अविकलगुणलक्ष्मीर्वीकलः सूनुराजः समभवदिह पुण्य शीलसत्यास

११ .... .... लमुदयस्थं । ह्येतयोर्येन चक्रे रविरिव भुवनं यो मानितः सर्वलोकैः॥ १५ सवितृचैत्यस्य पुरः सुमंडपं योऽकारयत्पूज्यसुधर्म्ममंडनं ॥ स्वसा च तस्याजनि रत्नसंज्ञिका सुरत्नसूर्य्या धर्नसिंहगेहिनी

१२ १६ भीमडजाह्णकाकलवयजलखीमडगुणिमाद्याः तयोर्बभूवुस्तनया निजवंशोद्धरण धौरेयाः १७ पितृव्यकसुतैः सार्द्धं यशोवीरो यशोधनः । पालयन्नस्ति पुण्यात्मा शैवं धर्म्मं जिनस्य च

१३ १८ आस्वडपुत्रौ ... सुमदनपालाभिधौ धन्यौ वृत्तानंदितलोकौ प्रीतया रामलक्ष्मणसदृक्षौ(शौ) । १९ जाया जाह्णदेवीति स्वजनकैरवकौमुदी । तस्य पुत्रौ तया प्रसूतौ शब्दार्थाविव भारतीदेव्या २० पे ( खे )तलः क्षितिपति

१४ गुणिगण्यो योच्छलत्कलियुगं सुविवेकात् सिंहद्यावदभीर्विजयादिसिंहविश्रुत इर्लेदुरयं किं । २१ दिवं गते भ्रातरि तस्य सूनौ लालाभिधे धर्म्मधुरीणमुख्ये श्रेयोऽर्थमस्यैव जिनेंद्रचैत्ये येनेह जी

१५ र्णोद्धरणं कृतं तु ॥ २२ जयताद्द्विजविसिंहः कलिकुंभिकविदारणैककृतयत्नः । निजकुलमंडनभानुर्गुणिदीनोद्धरणकल्पतरुः २३ सद्वृत्तविमलकीर्त्तिस्तस्यासीद्गुणवंशभूः पुण्यपटोदयक्ष्माभृत्पटप-

१६ पदीधितो ॥ २४ अनूपमा नाम सुवृत्ततोपि श्रियादिदेवीत्युभये तु जाये । पुरोगवंधोरभवच्च तस्य कांता वरा सूहवी धर्म्मशीला ॥ २५ देवसिंहः सुतोऽप्यस्य मेरुवन्महिमास्पदं ।दीपवद् द्योतितं येन कुलं चार्थीयमा .... ... .... ....

१७ २६ गुरुपट्टे बुधैर्वर्ण्यो यशः कीर्तिर्यशोनिधिः । तद्बोधादर्हतः पूजां यः करोति त्रिकालजां ॥ २७ हुंकारवंशजमहद्धमणीयमानः श्रीसांगणः प्रगुणपुण्यकृतावतारः तारेशसन्निभयशोजिनशा

१८ सनार्हो निःशेषकल्मषविनाशनभव्यवर्णः ॥ २८ सिंहपुरवंशजन्मा जयताख्यो विजितएनसः पक्षः । शुभधर्म्ममार्गचारीजिनभूमौ ननु च कल्पतरुः २९ प्रह्लादनो महाभव्यो जिनपूजापरायणः ॥ पात्रदानामृतेनैव क्षालितं वसुधातलं

१९ लं ३०-अपरं च अत्राऽगमन्मालवदेशतोऽमी सपादलक्षादथचित्रकूटात् । आमानुजेनैव समं हि साधुर्यः शांमदेवो विदितोऽथ जैनः ३१ धांधुर्बुधः साधुकरहं:प्रबुद्धो धन्यो धरित्र्यां धरणी धरोऽपि । श्रीसंघम

२० मुनिमानसाधुर्हाल्लखया राहड इष्टदर्शी ३२ साधुगर्जपतिमान्यो भूपवेश्मसु सर्वदा । राजकार्यविधौ दक्षौ जिनश्रीस्कंधधारकः ३३ नरेवषेण धर्म्मोयं धामानामा स्वयं भुवि । सुतोत्तमो विनीतोऽस्यजिनचिंतामणिप्रभुः

२१ नाम्नानमोपतिरिहाधिपमाननीयः साधुः सुभक्ताः सुहृदः प्रसिद्धः । नोडेकितः साधुमदात्क्वदापि योदानशौंडः शुमसौं [ शौ° ]डनामा ३५ घेहेडोऽपि सुधर्म्मस्थः साधुः सोमश्च सौम्यधीः । दानमंडन सौभाग्य .... ....

२२ कः सतां मतः ३६ अजयदेव इह प्रगटो जने तदनुश्वेतहरिः कुशलो जयीअनुजपून हरिर्हरिविक्रमः । सुजननामइहापि परिश्रुतः ३७ सलक्षणो वापणनामधेयो देदो विदांश्रेयतरश्च साधुः । सना .... ....

२३ पुरेंदो जिनपूजनोद्यतो रत्नोपि रत्नत्रयभावनारतः ३८ छाजुः सुधीः पंडितमानमर्द्दनः साधुः सदा दानरतश्च जैनः एते जिनाभ्यर्चन पात्रभक्ताः श्रीपार्श्वनाथस्य त्रिलोक्यपूजां ३९ संभूय सर्वैर्विधिवत्सु

२४ भव्यपूजाविधानाय विवेकदक्षैः । श्रीधर्म्मवृद्धः प्रभवाय शश्वत्कीर्त्तिस्थितिः सुस्थितकं महद्भिः ४० वस्त्र खंडतथाकुष्टमुरुमांसीसटंकणाचर्मरंगाद्यसद्रव्यमलत्यातृपमं प्रति ४१ एको द्रम्मस्तथा

२५ मालतीलघुवस्तुतः गुडकंबल तैलाद्यतंगडादिवृषं प्रति ४२ श्रीपार्श्वनाथचैत्येऽस्मिन् द्रम्मार्द्धं स्थितके कृतं भव्यलोकस्य कामानां चिंतामणिफलप्रदे ४३ संवत १३५२ वर्षे श्रीविक्रमसमतीतवर्षेषु

२६ त्रिशता समं द्विपंचाशद्भिर्नैरेवं कालेऽस्मिन् रोपितं ध्रुवं ४४ यावत्तिष्ठति सर्वज्ञाः शाश्वतप्रतिमामयाः तावत्तंद्यादिमेभव्याः स्थितकं चात्र मंगलं ४५ श्रीमान् सारंगदेवः पुरवरमहितः स्तंबतीर्थे सुतीर्थे नं

२७ धाचैत्यं जिनानामनघगुहकुलं श्रावकादान धन्याः नानातेजाधनाद्याः सुकृतपथपुषो भोपानामाहराव्ददेवो राजादिदेवो जिनभवनविधौ मुख्यतां ये गतास्ते ॥ ४६ भावाद्यौभावभूपस्व

२८ जनपरिवृतो ओजदेवोपि दाता जैने धर्म्मेऽनुरक्ताः श्रुतिगुणसहिताः साल्हरत्नौ वदान्यौ । अन्ये केऽपि संतः स्थितकमिह सदा पालयंत्यत्र वृद्धिं पुण्यंतस्तेषु पार्श्वो विदधतु विपलां ... .... ....

२९ तीं तामहाश्री; ४७ छ ६४ प्रशस्तिरियं लिखिता ठ० सोमेनउत्कीर्णा सूत्र० पाल्हा तेन

(૧૭) આ બન્નેને, વંશને અતિ ઉજ્જવળ કરનાર (ઉદ્ધારનાર) ભિમદ, જલ્હન, કાકલ, વયજલ, ખિમદ, ગુનિમ આદિ પુત્રો હતા.

(૧૮) મહાન્ વીર પવિત્ર મનવાળો યશોધન નિજ પોતાના પિત્રાઈ ભાઈ સહિત શૈવ અને જૈન ધર્મ અનુસરતો.

(૧૯-૨૦) અર્થદને બે પુત્રો ... ... ... પ્રજાને સદાચારથી રંજનાર, પરસ્પર સ્નેહમાં રામ અને લક્ષ્મણ સમાન. મદનપાલ અને ... ... કુમુદ સમાન સ્વજનને શશિ સરખા તેની પત્ની જલ્હણ દેવીથી જેમ સરસ્વતીએ શબ્દને અને અર્થને જન્મ આપ્યો તેમ ઉત્પન્ન થયા.

(૨૧) શુચિઓમાં અગ્ર ખેતલ રાજાએ કલિયુગને છળ્યો. સિંહના બાલ સમો નિર્ભય વિજયસિંહ નામે વિખ્યાત તે ભૂમિપર શશિ સમાન ભાસતો હતો.

(૨૨) ધર્મના પરમ અનુયાયી તેના અનુજ લાલાના મૃત્યુ પછી તેના શ્રેયાર્થે તેણે જિનેન્દ્રના મંદિરનો જીર્ણોદ્ધાર કરાવ્યો.

(૨૩) ગજ સમાન કલિયુગને એકી હસ્તે તોડવા પ્રયત્ન કરનાર, સૂર્ય માફક વંશને ઉજ્જવળ કરનાર, અને કલ્પવૃક્ષ જેમ શુચિ અને દીનને સહાય કરનાર વિજયસિંહ જય પામો.

(૨૪) સદાચારથી વિમળ કીર્તિ તેના ચરણમાંથી (ગુણનું અનિવાર્ય ફળ રૂપ) હોય તેમ પવિત્ર ... ... ...

(૨૫) તેને, જેનો ભાઈ તેના પહેલાં મૃત્યુ પામ્યો હતો એવાને, સદાચારમાં પણ અતુલ અનુપમા અને શ્રીયાદેવી પત્નીઓ હતી. અને ત્રીજી પત્ની અતિધર્મી અને પવિત્ર સહુવિ હતી.

(૨૬) તેના પુત્ર દેવસિંહે મેરૂ સમાન મહિમા પ્રાપ્ત કરી વંશને દીપક માફક પ્રકાશિત કર્યું.

(૨૭) આ દેવસિંહ, પોતે માન્ય કરેલા ગુરૂ, અને વિદ્વાનોથી સ્તુતિ પામેલા યશઃસાગર યશકીર્તિના બોધ પ્રમાણે ત્રણવાર અર્હતની પૂજા કરે છે.

(૨૮) હુંકાર વંશમાં અમૂલ્ય મણિ સમાન, નિજ પુણ્યકૃત્યોનો અવતાર, શશિ સમાન યશ સંપત્ત, જિન શાસન અનુસરવા યોગ્ય, સર્વ પાપનો પૂર્ણ નાશ થયાથી ઉજ્જવળ સાંગણ નામનો એક પુરૂષ હતો.

(૨૯) સિંહપુરના વંશમાં, પાપના માર્ગનો વિજય કરનાર, સદાચારી, જૈન ધર્મની ભૂમિ ઉપર કલ્પ વરૂ સમાન જયત જન્મ્યો હતો.

(૩૦) જિનની પૂજાપરાયણ અતિ મહાન પ્રહ્લાદને પાત્ર માણસોને દાન રૂપી અમૃત સિંચન કરીને પૃથ્વીતલનું પ્રક્ષાલન કર્યું.

(૩૧) વધારામાં માલવદેશમાંથી ચિત્રકૂટમાંથી સવાલક્ષ સહિત (?) આભા અનુજ સહિત આ સાધુ સાંભદેવ જૈનના નામથી જાણીતો અહીં આવ્યો.

(૩૨) મહં સાધુ પાન્ધ, બુદ્ધિમાન કન્હુ, ધરણીમાં મુખી ધરણધર ... ... ... ... મુનિમાન જાતિના વધા હાલ્સ અને રાહુક ઈશ દર્શી સાધુઓ ત્યાં હતા.

(૩૩) વળી સાધુ રાજપતિ પણ હતો. જેની આજ્ઞાનું પાલન નૃપના મહેલમાં સદા થતું; જે રાજ્યકાર્યોમાં દક્ષ હતો અને જિનની શ્રી સ્કંધ ઉપર ધારનાર હતો.

(૩૪-૩૫) તે ધામો નામે પૃથ્વીપર ધર્મનો અવતાર હતો. તેને વિનયી જિનચિંતામણિ પ્રભુ નર્બાપતિ નાગનો નૃપોથી પૂજનીય સાધુ, સુજન, મિત્ર અને પ્રસિદ્ધ પુત્ર હતો. આ

સર્વ હોવા છતાં તે કદિ મદ વાળો હતો નહીં. અને દાન કરવામાં સદા પ્રવૃત હતો અને પૌણ્ડ નામવાળો હતો.

(૩૬) વળી ઘેહુડ જે સદા ધર્મના પંથપર રહેતો હતો, તે પ્રજ્ઞ, પ્રભાવાળો, બુદ્ધિમાન અને દાનના ભૂષણથી ઉજ્જવળ હતો, અને સજ્જનોથી માન પામતો.

(૩૭-૩૮) અને પ્રજાને જાણીતો અજયદેવ હતો. તેના પછી સુખી અને સદ્ગુણી ખેતહુરી તેનો અનુજ પૂનહરિ, સિંહના વિક્રમવાળો, સુજન સારા નામવાળો; સલ્લક્ષણવાળો બાપણ, વિદ્વાન સાધુઓમાં શ્રેષ્ટ દેહ, જિનની પૂજામાં પ્રવૃત પુરેન્દ્ર, અને ત્રણ રત્નોની ભાવનામય રત્ના.

(૩૯-૪૦) વિદ્વાનોનો મદ ઉતારનાર બુદ્ધિમાન્ સાધુ છાજુ જૈન ધર્મનો અનુયાયી, અને સદા દાન કરવામાં ચિત્તવાળો હતો, આ સર્વ જીનના પૂજન પાત્ર ભક્તો હવા. પાર્શ્વનાથની પૂજા જોઈ, સર્વ મહાન અને વિવેકી પુરૂષોએ એકત્ર થઈને વિધિ અનુસાર પૂજા માટે, ધર્મ પ્રચાર માટે, અને તેનો સદા માટે યશ સ્થાપવા કંઈક વ્યવસ્થા કરી.

(૪૧-૪૨-૪૩) આ શ્રી પાર્શ્વનાથ જે ચિંતામણિ માફક સજ્જનોની સર્વ અભિલાષ પૂર્ણ કરે છે તે, વસ્ત્રખંડ, કુષ્ટ, સુરૂમાંસિ, ટંકન, ચેમેર ... ... આદિ બળદના વજનની ચીજપર એક દ્રામ પ્રાપ્ત કરશે. અને ઓછા મૂલનાં ગુડ, કંબળ (કાંબળા), તેલ અને તગર આદિપર એક બળદ ઉપાડી શકે તેટલા વજનપર અડધો દ્રમ્મ પ્રાસ કરશે.

(૪૪) શ્રી વિક્રમના સમય પછી ૧૩૫૨ વરસમાં આ સદાને માટે નક્કી કરાયું છે.

(૪૫) જિનોની પ્રતિમા રહે ત્યાં સુધી તે મહાન પુરૂષો અને તેમની કરેલી વ્યવસ્થાનું પાલન થાઓ અને તેઓ સુખી થાઓ.

(૪૬) યાત્રાનું એક સારૂં સ્થાન સ્તંભતીર્થ, શ્રીમાન્ સારંગદેવ, જિનદેવનું મંદિર, ગુરુનું પાપરહિત કુળ, શ્રાવક, નાનો, તેજો, ધનો આદિ જેઓ નિત્યદાન કરવા તત્પર હતા, અને મોષ, હરદેવ, રાજાદેવ જેઓ વ્રતનું પાલન કરનાર જિન ધર્મ પોષનાર, ને જેઓ મુખ્ય ભાગે જૈન મંદિરની સંભાળ લેવામાં સંબંધવાળા છે તે આ સર્વે અભ્યુદય પામો.

(૪૭) ભાવ ભૂપતિ જેને કુળ સહિત અતિ શ્રદ્ધા છે; મહાદાની ભોજદેવ જૈન ધર્મના તે સર્વ અનુયાયીઓ અને જેઓ તેમના પુણ્ય માટે સ્તુતિ પામ્યા છે ... ... ... ... ઉદાર સાલ્હ રત્ન આદિ સંતસુજનો જે આ વ્યવસ્થાનું પાલન અને તેમાં વૃધ્ધિ કરશે ત સર્વેને અતિ રૂપવાન, પાર્શ્વનાથ અતિ અભ્યુદય અર્પો. ... ... ... ... ... આ (પ્રશસ્તિનો) લેખ ઠ૦ સોમથી લખાયો અને સુત્ર. પલ્હાથી કોતરાયો.

---

નં૰ ૨૨૫

# (વાઘેલા રાજા સારંગદેવના સમયનો) વંથલીમાંથી ઉપલબ્ધ એક અધુરો લેખ

વિ. સં. ૧૩૪૬.१

રાજકોટના મ્યુઝિયમમાં એક અધુરો, નીચે આપેલો લેખ હું પહેલી જ વાર પ્રસિદ્ધ કરૂં છું. તે રાજકોટના વૉટસન મ્યુઝિયમમાં છે. એ વિષે એટલું જ જણાયું છે કે તે કાઠિયાવાડમાં જૂનાગઢ સ્ટેટના વંથલી ગામમાંથી ૩૫ વર્ષ પહેલાં મળી આવ્યો હતો, અને ત્યારબાદ તે મ્યુઝિયમને ભેટ કરવામાં આવ્યો હતો.

તે એક જાડા પીળાશ પડતા પત્થરની શિલા ઉપર કોતરેલો છે, જે શિલાનું માપ ૨'૫"×૧'-૯" છે. થોડા અક્ષરો પહેલી ચૌદ પંક્તિઓની શરૂવાતમાં નાશ પામ્યા છે, તે સિવાય લેખ એકંદરે સુરક્ષિત છે. એક ઉભી પંક્તિ વડે જમણી અને ડાબી બાજુએ અર્ધા ઇંચનો માર્જીન બતાવેલો છે.

તેના ઉપર ૩૩ પંક્તિઓ લખેલી છે. જે ૨'-૪"×૧-૬" ના માપની જગ્યા રોકે છે, છેલ્લી પંક્તિ અર્ધી કોતરેલી રહી છે, આનું કારણ સમજાયું નથી.

લિપિ નાગરી છે. તે એકંદરે સુંદર રીતે કોતરેલી છે. અક્ષરો શરૂવાતમાં મોટા છે, પણ પછીથી તેનાથી અર્ધા કદના આવે છે.

ભાષા સંસ્કૃત છે. ૪૪ શ્લોકો સંપૂર્ણ છે અને છેલ્લો શ્લોક અધુરો છે.

લેખની શરૂવાત શિવ અને પાર્વતી તથા વિષ્ણુની સ્તુતિથી થાય છે. ત્યારપછી જગતસિંહના નામથી શરૂ થતા એક વંશનું વર્ણન આવે છે. તેણે મણ્ડલીકને લડાઈમાં હરાવ્યો હતો. વામનસ્થલી(હાલનું વંથલી)માં તેણે બિઝલેશ્વર(શિવ)નું મંદિર બંધાવ્યું હતું.

તે પછી રાષ્ટ્રકૂટ વંશનું વર્ણન આવે છે. તે વંશમાં ઉદ્દાલ નામનો મહાન યોદ્ધો થયો હતો. તેની બહાદુરી જોઈ તેને લવણપ્રસાદે પોતાનો પ્રતિનિધિ બનાવ્યો હતો.

તેના વંશજોના વર્ણન પછી લાવણ્ય શર્મા જે કુટુંબમાં જન્મ્યો હતો તે ઔનસ ગોત્રના વિદ્વાન બ્રાહ્મણ કુટુંબનું વૃત્તાંત આવે છે.

છેવટે લેખમાં કપિષ્ઠલ ગોત્રના આનંદપુરના એક વિદ્વાન બ્રાહ્મણ કુટુંબનું વર્ણન શરૂ થાય છે. તેમાં ગોવિન્દ જન્મ્યો હતો. તેના પુત્રનું નામ કોતરવાનું હતું, ત્યાંથી કામ અધુરૂં રહ્યું છે.

આ લેખ ઉપરથી ગુજરાતના ચૌલુક્ય (વાઘેલા) રાજાઓના તાબામાં કાઠિયાવાડ હતું તે સમયનો જાણવા જેવો ઈતિહાસ મળી આવે છે. શરૂવાતની પંક્તિ અધુરી હોવાથી લેખના તારીખ જાણી શકાતી નથી. પરંતુ વિ. સં. ૧૩૪૬ ના એક અપ્રસિદ્ધ લેખના ૩ જા શ્લોક સાથે આપણા લેખનો ૩૧ મો શ્લોક અક્ષરશઃ મળતો આવે છે. એટલે માની શકાય કે આ લેખ વિ. સં. ૧૩૪૬ ના અરસામાં લખાયો હશે. એ બન્ને લેખો એક જ સ્થળેથી મળ્યા હતા અને એક જ ખંડીયા રાજા વિજયાનંદના સમયનું સૂચન કરે છે. કયા લેખમાંથી બીજાએ આ શ્લોકની નકલ કરી હતી એ કહી શકાતું નથી, પરંતુ આપણો લેખ વિ. સં. ૧૩૪૬ ના અરસામાં લખાયો હતો એટલું ચોક્કસ કહી શકાય.

આ લેખમાં ચૌલુક્ય રાજાનાં બે જાગીરદારકુટુંબોનું વર્ણન આપ્યું છે. એક રાષ્ટ્રકૂટ અને બીજાનું નામ બેમાંથી એક પણ લેખમાં આપ્યું નથી. આ બે કુટુંબો વિજયાનંદ અને નાગલ-

---

१ એ. ઓ. આં. ઈ. વો. ૫ પા. ૧૭૧ ડી. બી. દિસ્કલકર લેખ ૨૫

દેવીનાં લગ્નથી જોડાયાં હતાં. ખાસ ઉપયોગી હકીકત એ છે કે, વિજયાનંદ જેમાં જન્મ્યો હતો તે અરિસિંહનું કુટુંબ ગુજરાતના વાઘેલાઓના રાજકુટુંબ સાથે જોડાયું હતું, કારણ કે, વાઘેલા મહારાજા વીરધવલે પોતાની પુત્રી પ્રીમલ દેવીનાં ક્ષેમાનંદ સાથે લગ્ન કર્યાં હતાં. તેઓનો પુત્ર વિજયાનંદ હતો. આ ત્રણ કુટુંબોનો સંબંધ નીચે પ્રમાણે છે:—




અરિસિંહના વડિલ બંધુ જગતસિંહે મણ્ડલિકને હરાવ્યાનું કહ્યું છે. આ મણ્ડલિક વંથલી-(વામનસ્થલી)માં રાજ્ય કરતા ચૂડાસમા કુટુંબનો હતો. તેણે મુસલમાનોને હરાવીને ગિરનાર ઉપર નેમિનાથનું મંદિર સુવર્ણથી મઢાવ્યું હતું. જગતસિંહે તેને હરાવી નસાડી મૂક્યો હતો અને જગતસિંહના વંશજોએ વિજયાનંદના સમય સુધી ત્યાં રાજ્ય કર્યું હતું. મણ્ડલિકના એક વંશજ રા' મહીપાલે ને પાછું અમરસિંહ અને તેજસિંહ પાસેથી જિતી લીધું હતું.

બીજે સ્થળે કહ્યું છે કે, ચૌલુક્ય (વાઘેલા) રાજા વીરધવલે પોતાના રાજ્યારોહણ પછી તરત જ વંથલી ઉપર ચઢાઈ કરી અને ત્યાં રાજ્ય કરતા પોતાના સાળા સાંગણ અને ચામુણ્ડ એ બે ભાઈઓને હરાવી મારી નાંખ્યા હતા, કારણ કે તેઓએ તેને ખંડણી આપવા ના કહી હતી. આ બધી હકીકતો વંથલીના ઇતિહાસમાં કેટલીક મુશ્કેલીઓ ઉપસ્થિત કરે છે. પરંતુ એટલું માની શકાય છે કે, મણ્ડલિકને હરાવી કાઢી મૂક્યા પછી વીરધવલે પોતાના સાળા સાંગણ અને ચામુણ્ડ એ બે ભાઈઓને ત્યાં નિમ્યા હતા, પણ તેઓએ ખંડણી આપવા ના કહ્યાથી તેઓને પણ મારી નાંખ્યા હતા, અને ક્ષેમાનંદને (કદાચ તેના પિતા અરિસિંહને) વંથલીમાં રાજ્ય કરવા નિમ્યો અને પોતાની પુત્રીનાં તેની સાથે લગ્ન કર્યાં હતાં.

લેખમાં બે બ્રાહ્મણ કુટુંબો શા કારણથી આપ્યાં છે તે કહ્યું નથી. પરંતુ શ્રીધર કવિ જેણે આ લેખ લખ્યો હતો, તે કપિષ્ઠલ ગોત્રના કુટુંબનો સગો હશે એમ લાગે છે. જો આ સત્ય હોય તો બન્ને નાગરબ્રાહ્મણ કુટુંબો હોવાં જોઈએ, કારણ કે તે કુટુંબ આનંદપુર એટલે હાલના વડનગર જે સુવિખ્યાત નાગરબ્રાહ્મણ જ્ઞાતિનું મૂળ વતન હતું, ત્યાં રહેતું હતું એમ સ્પષ્ટ જણાવ્યું છે. વળી ઉપર નકલ કરેલો બીજો લેખ* માધવ નામના બીજા કવિએ લખ્યો હતો, તે પણ (વિચિત્રપુર એટલે વડનગરનો) નાગરબ્રાહ્મણ હતો.

*જુઓ એ. બા. ઓ. ઇ. પા.૧૭૪

अक्षरान्तर

१ .... [ । ] .... [ दे ]वतारातिदून त्रिभुवनवनराजी[ नी ]रदो नीलकंठ [ : ज ]यति तदनु तस्य प्रेयसी पीतपीतच्छविरविरत

२ .... .... [ ॥ १ .... तपांडुरपुंडरीकसौखप्रसुप्तिकविरं [ च ] नचिं चिरी- कः । देव पयोमयपयोधपयोधिशायी पातु प्रियांकशय

३ .... .... [ ॥ २ ] .... .... ण[ स्तेज ]स्विनामग्रणीरग्रामीणगुणार्ण- वोनिजगर्तिसहो जगद्बांधवः । जित्वा संयति मंडलिकनिवहं स्थाने हयालां ततो ।

४ .... .... ... ॥ ३ दुःसामंत यवासकावनिरुहव्यूहव्यथाविस्तरव्यापाराप- रिभूतभूतलपति प्रौढप्रतापानलः । उन्मीलत्तरपुष्करव्यतिकर; संग्रामसीमा

५ .... राघर ॥ ४ मातुर्विझलदेव्यायः( याः ) श्रेयसे विझलेश्वरं श्रीवामनपुर- स्यांते विश्वकान्तमचीकरत् ॥ ५ अरिसिंह इति श्रीमान्वीरस्तस्यानुभूरभूत्[ । ]

६ .... ... ॥ ६ व्योमांतः शशिदंभतः शशि कलालंकारमौलौ सुरस्रोतः- पूतपयस्तरंगपटलीलीलायितव्याजतः । नाभीपांडुरपुंडरीकमिष[तः पाथो ? ] धिपुत्रीपति

७ .... .... ... कीर्तयः ॥ ७ सा( मंतसु )कुटः श्रीमान्क्षेमानंदस्तदं- गभूः बभूव भूवनानंदकंदकंदलनांबुदः ॥ ८ चौलुक्यनृपतेः पुत्री श्रीवीरधवल- प्रभोः श्रीमत्प्रीमलेद

८ .... .... [॥ ९ ][1] .... [ वि ]जयानन्दस्तयोरजनिनंदनः । अपि वाचस्पतिर्मूकः के वयं तद्गुणस्तवे ॥ १० कल्पांतारभटीपतिप्रपुरभिद्भालाक्षिकाला- नलज्वालाजालनिभप्रभा ।[2]

९ .... .... [ । ] त्रयलक्ष भक्षणकलाविख्यातकौक्षेयकः क्षोणी चक्रमलंच- कार विजयानन्दो मुकुंदोपमः ॥ ११ सर्व्वज्ञः शक्तिपाणिर्धनपतिरमृतज्योतिरं- भोजनेत्रः सौ

१० .... .... [ पा ]वको धर्म्मराजः विद्यानंदो विरेजे । सकलसुरमयः किंतूलंबोदरत्वं वक्रत्वं मंदतां च क्वचिदपि कलयामास नासौ चिराय ॥ १२ यस्योच्चैः कीर्त्तिपूरे परि

११ .... ... चत्वारश्चंद्रलोकप्रतिभटरुचयः सप्तलोकाग्रभूवुः । शैलाः कैलास- लीलायितमसमशरारातिशोभाममर्त्यानयो गंगाविलासं सुरगजललितं कुंभिनः किं

१२ .... ... [ ॥ १३ ] .... दशमुखो दनुजारिणा समं निर्म्माय [ वैरम ] चलोपि तवानतानवं । सेवेपि दोषसमतामयतामनेनलोकंपृणेनहरिभाक्तिसमृद्धबंधु- ना ॥ १४ श्रीवामनपुरे ब्रह्मपुत्री

---

१ पुनः श्री એમ પુર્તિ થઈ શકે २ આ લીટાનો કોઈ ભાગ નથી

१३ .... [ ॥ ] .... ब्रह्मपुरीं कृत्वा ब्राह्मणेभ्यः सुधीरदात् ॥ १५ श्रीविंझले-
शनिलयाभरणं चकार यस्तोरणद्वितयमंबर [ चुंबिशृंगं ] आंदोलकंव महनी
यमहो वितानमुत्तालपट्टमपि वंधुर

१४ .... ॥ १६ ॥ इहैव देवनिलये निजकीर्त्तिनिभप्रभं । पश्चिमाभिमुखं शंभु-
सौधमुद्धरतिस्म यः ॥ १७ अवदानानि दानानी [ धर्म्म ]स्थानानि यानि
यः । चकार गणितं नैषा विधिनापि विधीयते ॥ १८

१५ लोकानंदकरः प्रतापनिकर प्रत्युग्रवीरोत्करः कल्याणाकरकौमुदीहिमकरः प्रावी-
ण्यरत्नाकरः । चंचत्कीर्त्तिचयप्रपंचसिचयप्रच्छादिताशोच्चयः श्रीलीलानिल-
यश्रिरायज

१६ [ यति ] श्रीराष्ट्रकूटान्वयः ॥ १९ वीरचूडामणिस्त[ त्र ] .... डलः ।
उद्दलः सदलंकारः कारुण्यरसभूरभूत ॥ २० चौलुक्य वंशकमलानालिनीम-
रालस्ताद्दग्यशोलवणिमा लवणप्र

१७ साद: वीरेषु वीरमवलोक्यमहः समेतमेतंचिरायनिजचि[ न्हय ]रं चकार २१
यदीय कीर्त्तिरधरोत्तरीयवासोयुगंदुग्धपयोधिगंगे । शशी शिखा रत्नमुडूनि
हारस्तद्वीतयश्चंदन चंद्रलेपः

१८ ॥ २२ तदंगभूर्मंगल[ भू ]र्मनोभूमनोज्ञरूपोजनि जैत्रसिंहः । यशोभरो-
भूदनिरुद्ध एव यस्याधिकप्रीणिताचित्रलेखः ॥ २३ तदनु मदनतुल्यस्तस्य
कंसारिशक्तेरजनि तनुजरत्नं रत्नगर्भावतंसः । गु

१९ णगरिमगभीरो वीरकोटीरहीरः समरविजयलक्ष्मीभा[ जनं ] भीमसिंहः ।
[ ॥ २४ हंतुं ] वीसलभूपते रिपुगजस्तोमं रणप्रांग[ णे सिं ]हो मेवततार
तस्य भगवन्सांनिध्यमास्तां तव । पार्वत्येतिनिशम्य सम्यगुदितं

२० भीमस्तथैवाकरोत्तेनासौ वसुधातलेप्यभिधया श्रीभीमसिंहोभवत् ॥ २५ कुलेन
शौर्येण नयेन कीर्त्या [ श्रि ]याभिरामो भुवि भीमसिंहः । तद्वीसलक्षो-
णिधवेन तेने परिच्छदो [ स्यैवनि ] देशवर्ती ॥ २६ तस्य

२१ भीणलदेवीति कलत्रमतुलाकृतिः । रतिः प्रीतिश्च गौरी च यया जिग्ये तनुश्रिया
॥ २७ रावणारीरमणी रमणीया तत्सुताजयति नागलदेवी कीर्त्तयस्तिलकयंति
यदीया नागनाकनखंति जगति ॥ २८ स ।

२२ स्यावाचां विभूति[ र्वि ]लसति वदने चित्रलेखा पदेस्या गौरीकान्तिः [ श ]
रीरे हृदि रतिरलकश्रेणिका मूर्ध्नि कृष्णा । पाणौ लक्ष्मीरनंता मनसि
गुणततिः किं वदामोतिरेकादेका निःशेषलोकोत्तरयुव

२३ तिमयी भाति नागल्लदेवी ॥ २९ लालित्यं दधती मनोहरपदन्यासाभिरामाकृ-
तिर्विभ्राणा रसपद्धतिं मधुरतामाबिभ्रती संततां । आहारैरमृतोपमैरहरहः संमोद-
यंती सतामंतः सत्कवितेव कस्य न मुदे

२४ नागल्लदेवी भुवि ॥ ३० वीरः श्रीविजयानंदः क्षेमानंदस्य नंदनः । ताममंदगु-
णोदारान्दारान्प्राप्य मुदं दधे ॥ ३१ मंडलेश्वरकोटीरमणोरस्य महीयसः ।
श्रीमन्नागलदेवीयं पट्टराज्ञीपदेमवत् ॥ ३२ मुकुंद ।

२५ इव कान्तासु विद्यानंदो घनास्वपि । सत्यायामिव सत्यान्वियस्यामधिकनिर्वृतिः
॥ ३३ [ श्रीमासामंतसिंह ]ः श्रीतेजसिंहस्तयोः सुतौ ॥ हीरादेवी तथा तारा-
देवी देवीनिभे सुते ॥ ३४ भस्मोद्धूलितशूलिमौलिमिलित

२६ स्वर्लोककल्लोलिनी कल्लोलप्रतिमल्लकीर्त्तिसलिलप्रक्षालितक्ष्मातलः । आचंद्रार्क
[ मसा ]बुदेतु विजयी राजा नको जानकी जानिश्रीररिसिंह वंशमुकुटः सामं-
तसिंहः सुधीः ॥ ३५ यः शत्रूणां समितिं शमयत्य

२७ द्भुतं बाहुतेजस्तेजः सिंहः स जयति जगन्मानसोत्तंसहंसः । धिक्कुर्व्वाणः स्मरमपि
वपुः शोभया चित्रमेतं भेजे लक्ष्मीरतिरपि तथा कीर्त्तिपूरो निरुद्धः ॥ ३६ हीरा-
देवी गभीरासौ लावण्यधवला

२८ कृतिः । तदस्यै विधिना दत्तो लावण्यधवलो धवः ॥ ३७ लावण्यधवलो वीर-
श्रीलुक्यकुलदीपकः । स्नेहवत्या सुदश्या दिदीपे दीप्तया यया ॥ ३८ हीरादेव्या-
मथ विधिवशान्नाकलोकं गतायां

२९ तस्या माता महिमलहरीधामनागल्लदेवी । अस्या मूर्त्तिं त्रिभुवनगुरोर्विल्हलेशस्य
गर्भागारे गौरीमिव शशिमुखीं प्राङ्मुखीं निर्ममेसौ ॥ ३९ अचंडचंडद्युतिमंडला-
भ्यां द्यौः कुंडलाभ्यामिव भा ।

३० ति यावत् । नागल्लदेवीदुहितुः पवित्रा मूर्त्तिः क्षितौ नंदतु तावदेषा ॥ ४०
विद्वान्मौनसवंशरत्नमवनीसीमंतमुक्तामणेर्विद्यानंदविभोर्विभाति [ भु ]वने लाव-
ण्यशर्म्मा गुरुः । धीमानस्ति नरायण ।

३१ स्तदनुजस्तस्यानुजन्मागनि श्रीधंधस्तनुजोस्य राजविकृती श्रीमानयं श्रीधरः ॥
४१ सती च सीता च सरस्वती च गंगा च गोदा च कलिंदजा च । नागल्ल-
देवी च नितांतमेता जयंतु सद्यापि यश

३२ स्समेताः ॥ ४२ रहस्यमिव शौचस्य सौभाग्यस्येव भाग्यभूः । पुण्यस्येव परीपाकः
श्रीमन्नागलदेव्यसौ ॥ ४३ वंशे कपिष्ठलमुनेरवनीवतंसरत्नंवनीपकवनीनवनी-
रवाहः । मूजानिपूजि

३३ तपदः पदमिंदिराया गोविंद इत्यजनि कोविदसार्वभौमः ॥ ४४ श्री सिंघुरा-
नंदपुरद्विजस्य तस्यांगजन्मा

નં૦ ૨૨૬

# ગુજરાતમાં ખંભાતમાંથી ઉપલબ્ધ શિલાલેખ*

ગુજરાતમાં ખેડા કલેકટોરેટ નીચે એક મુસલમાન સંસ્થાનની રાજધાની ખંભાતમાં કુન્ત-નાથના મંદિરમાંથી આ શિલાલેખ મળી આવ્યો છે. પ્રવેશદ્વારની જમણી બાજુની ભીંતમાં જડેલા ધોળા આરસપાણના ટુકડામાં તે કોતરેલો છે. આ લેખમાં ખાસ નવીનતા એ છે કે તે અધુરો રહી ગયો છે. તેનું માપ ૩૧ × ૧૬ ઇંચ છે. તેમાં દેવનાગરી લિપિમાં સંસ્કૃત શ્લોકોની ૧૯ પંક્તિઓ છે. તેમાં સોલંકી વંશની વાઘેલા શાખાના ચાર પુરૂષોનાં નામો આપેલ છે. આમાં છેલ્લો વર્ણવેલો પુરૂષ વીસલદેવ છે, જે ગુજરાતનો પહેલો વાઘેલા રાજા હતો. તે લેખ અધુરો હોવાથી તારીખ અગર લેખનો સંભવિત સમય પણ આપી શકાય તેમ નથી.

* ભા. સં. ઈ. પા. ૨૧૪

अक्षरान्तर

१ ॥ ६० ॥ अर्हं ॥ श्रेयांसि प्रतनोतु वः प्रतिदिनं श्रीनाभिजन्मा जिनो यस्यांकस्थलसीम्नि केशपटलीभिर्न्द्रनीलप्रभा ॥ सोत्कंठं परिरंभसंभ्रमजुषः साम्राज्यलक्ष्म्या .... विटं

२ कंकणकिणश्रेणीव संभाव्यते ॥ १ ॥ सोव्यात्पार्श्वविभुर्नतौ फणीपतेः सप्तास्यचूडामणिसंक्रांतः किलयोऽष्टमूर्तिरजनि सप्ताष्टकर्मछिदे ॥ यद्भक्तं दशदिगजनव्रजमभित्रांतु तथा

३ सेवितुं यं यत्तादनसाविश चतुरभूदेकादशांगोऽपि सः ॥ २ ॥ त्रैलोक्यालयसप्तनिर्भयभयप्रध्वंसलीला जयस्तं माद्रुस्तरसप्तदुर्गतिपुरद्वाराकरोर्घागलाः ॥ प्रीतिप्रोक्षितस

४ सतत्वाविटपिप्रोद्भूतनूत्नांकुराः शीर्षे सप्तभुजंगपुंगवफणाः पार्श्वप्रभोः पांतु वः ॥ ३ ॥ लोकालोकलसद्विवारविदुरा विस्पष्ट निःश्रेयसद्वारः सारगुणालयस्त्रिभुवनस्तुत्यांघ्रिपंकेरुहः ॥ श

५ श्वद्विश्वजनीनधर्म्मविभवो विस्तीर्णकल्याणभा आद्योन्योऽपि मुदं जनस्य ददतां श्रीतीर्थराजः सदा ॥ ४ ॥ दैत्यारिर्नियतावतारनिरतस्तत्रापि कालमितं त्राताकैंडुभवान्ववाय

६ पुरुपास्तेपि त्रुटत्पौरुपाः ॥ कः कर्ता दितिसूनुसूदनमिति ध्यातुर्विधातुः पुरा संध्याम्भश्चुलुकाद्भटोभवदसिंदैत्यैः समं कंपयन् ॥ ५ ॥ चौलुक्यादमुतः समुद्ररसनोद्धौरकधौरयतादुद्ध

७ र्षादुदमुदूदंचदभयश्चौलुक्यनामान्वयः ॥ जातास्तत्र न के जगत्रयजयप्रारंभनिर्दंभदोस्तंभस्तंभितविश्वविक्रमचमत्कारोर्ज्जिता भूभुजः ॥ ६ ॥ तेषामुद्दामधाम्नामसमतममहः संपदां ।

८ संप्रदायैर्व्वीरश्रीदर्म्पणानां दिवसपतिरिव द्योतकोऽभूत् ॥ राजार्णोराजनामा रणरुधिरनदीशोणमर्णोधिमरणो भारौद्विटस्त्रैणसाद्रांजननयनभवैः श्यामतामानयद्यः

९ ॥ ७ ॥ यस्यासिः समरांबरेवघुरवद्धाराप्रपातैरिपुस्त्रीगंडस्तनभित्तिचित्ररचनाः स्मर्तव्यमात्राः सृजन् तेनेकामपि तां प्रतापतडितं यस्याद्युतिर्योततेद्यापिस्थाणुललाटलोचनदिनस्वाम्यौर्व्ववन्हिच्छ

१० लात् ॥ ८ ॥ अंगचंगीमतरंगितरंगा रंगदुल्वणांगुणप्रगुणश्रीः ॥ राजनीतिरिव यस्य नरेंदोर्वल्लभाज्जनि सलक्षणदेवी ॥ ९ ॥ तस्मिन्निंदुकलोपदंशकसुधाकल्पद्रुदचासवस्वादेभ्यो ध्रुवधूजनाधरर-

११ सं संबुध्यमानेऽधिकं ॥ तत्पुत्रोलवणाऽधिपतीरावलिसद्वीरप्रणादो जयप्रासादो लवणप्रसादनृपतिः पृथ्व्याः प्रपेदे पतिः ॥ १० ॥ रणप्रणुन्नारिमनः प्रसादः सधर्म्मकर्म्मोप्तशिवप्रसादः

१२ दानप्रतानक्षतविप्रसादः कस्यानमस्यो लवणप्रसादः ॥ ११ ॥ खेदीचेदीश्वरो-
भूद्गुरुभयतरलः कुंतलः कामरूपः कामं निष्कामरूपः कलहकलहयच्छेदशीर्णो
दशार्णः ॥ कांबोजस्तु-

१३ त्वदोजः स्थितिरतिसरलः केरलः सूरसेनस्वामीनिःशूरसेनः प्रसरति परितो यत्र
दिग्जैत्रयात्रे ॥ १२ ॥ रम्यसर्वविषयाद्भुतलक्ष्मीकाननाशिखरिजातिमनोन्या( ज्ञा )॥
प्रेयसी मदनदेवीरमंद त-

१४ स्य संमदमदत्तमहीव ॥ १३॥ किंनोस्वमतयाथनिर्ज्जरतयामृत्युंजयत्वेन वा नित्यं
दैत्यजयोद्यमेन नयतः प्राणप्रियाकेलयः ॥ इत्यर्त्ति श्रुसदारणैर्दनुजनुर्निर्हारणैद्दारुणै-
र्लुपत्यत्र

१५ सुतोऽस्य वीरधवलो भारं बभार क्षितेः ॥ १४ ॥ श्रीदेव्या नव्यनीलोत्पलदल-
पटलीकल्पिताकेलिशय्यास्फुर्ज्जद्दाहूण्मवन्होर्निखिलरिपुवनप्रोषिणो धूमपंक्तिः ।
वीरत्वे दृष्टिदोषोद्धू-

१६ यविलयकृते कज्जलस्यां कलेपा( खा )पाणौ कृष्टारिलक्ष्म्याः श्लथतरकबरी
यस्य रेजेसि यष्टिः ॥ १५ ॥ भूपस्यास्य प्रतापं भुवनमभिभविष्यंतमत्यंततापं
जाने ज्ञानेन मत्वा पृथुदवथुभिया पूर्वमेव प्रतेने ॥

१७ वन्हिर्वेश्मोग्रभाले शशिकरशिशिरस्वर्धुनीसंनिधाने । वार्धावौर्वोनिवासं पुनरिह
मिहिरो मज्जनोन्मज्जनानि ॥ १६॥ गौरीभूतभुजंगमरुचिरा रुचिपीतकालकूटघटा ॥
अकलंकितविधृत्यविधुर्यस्की-

१८ र्त्तिर्जयति शिवमूर्त्तिः ॥ १७ ॥ बहुविग्रहसंगराचितमहसा घनपरमहेलया श्रितया ।
जयलक्ष्म्येव सदेव्या वयजलदेव्यादिदेवनरदेवः ( : ) ॥ १८ ॥ तस्मिन्
शंभूसभासदां विदधति प्रौढप्रभावप्रमाप्राग्भारैः परमेश-

१९ दर्शनपरानंदस्पृशां विस्मयं ॥ तज्जन्माजगतीपतिर्विजयते विश्वत्रयीविश्रुतः ॥
श्रीमान् विश्वलदेव इत्यरिवलस्वांतेषु शल्यं क्षिपन् ॥ १९ ॥ यं युद्धसज्जमिव
चापधरं निरीक्ष्य स्वप्ने विपक्षनृपतिः प्रति ( अधुरं )

